

* श्रीहरिः *

# शिवमाहिम्नः स्तोत्रम् ।

विद्वद्वर्य श्रीरामदीन शुक्ल-विरचित

षट्पत्तीय-भाष्य समलंकृतम् ।

तच्चेदम्

तत्प्रपौत्र महामहोपदेशक बाणीभूषण

श्री पं० नन्दकिशोर शुक्लेन प्रकाशितम् ।

पुस्तकप्राप्तिस्थानम्--

सनातनधर्म कार्यालय

पोष्ट टेढ़ा जिला--उन्नाव

प्रथमावृत्तिः १००० } सम्वत् १९७९ माघ {

# निवेदनम् ।

अयि पुण्यप्रवणमनसः सुमनसस्तत्रभवन्तो विद्यारसिकाः ! विज्ञातं भवतु तत्रभवताम् । यत्किल सकलवीरवरसामन्तमण्डलमुकुटमणि मरीचिमञ्जरीचर्चितचरणयुगलस्य अर्थिकुलकमलाकरदिवाकरविस्तारितिकरमण्डलस्य चतुरुदधिमालामेखलाया भुवो भर्तुः शेष इवाशेषक्षितिमण्डलभारधारणोद्धुरकन्धरस्य महाराजश्रीविक्रमादित्यस्य प्रारभ्यमाणविंशतितमशताब्दे, अवधप्रदेशे अनेकविद्वज्जनकृतनिकेतने उनावप्रान्तान्तर्गत **टेढ़ाग्रामे** आसीत् तपोविद्याशुक्ले शुक्लान्वये नित्यं तपःशौचाचारनिरतः अस्पृष्टश्च स्पृहया मुनिरिवाचिन्तितसर्वविषयः अवगाहितसकलशास्त्रः अध्यापितशिष्यगणैर्दिग्विदिक्षुलब्धकीर्तिः सततमध्ययनाध्यापनप्रवर्तितमनाः दर्शनार्थसमागतशतसहस्रमनस्विजननयन विषयीकृतपवित्रमूर्तिः पण्डितप्रवरः **श्रीरामदीनशुक्लः** ।

यस्य ब्रह्मतेजसाकृत्स्नमवधमण्डलं समुद्भासितमासीत् । यस्य च विद्याकौशलं "संस्कृतवाद" सन्दर्भेण "रामकीर्ति" काव्येन "सारस्वतचन्द्रिकाटीकया" चेत्यादिनिर्मितिभिः

सवितुरिव तेजो विकासितम् जगति। इदं शिवमहिम्नः स्तोत्रस्य षट्पद्मीयं भाष्यं तत्कृतिपरिचये कीदृगिति कुशलैः स्वयं विभाव्यम्।

यत्किल सोनापट्टी कलकत्तापत्तननिवासिनो धर्ममूर्ते कान्यकुब्जवंशावतंसस्य श्रीमद्दुर्गाप्रसाद शुक्लस्यनुरोधातिशयेन लोके प्रकाशितम् भवति। अयमुक्तः शुक्लः, विद्यावाचस्पतिः शास्त्रिप्रवरः आर्यमिश्रः श्रीशङ्करदयालु मिश्रश्च अङ्कितपत्रसंशोधनादिसाहाय्यप्रदानेन भवतु धन्यतमः। यत्कृपालवैः रत्नमिव गुप्तमिदं ग्रन्थरत्नं रत्नाकरवलयमण्डितायां भुवि, रसभावभावितविमलधियां विदुषां मोदहेतवे विकासाय शक्तम्।

मुद्रणालये संस्कृतभाषाभिज्ञांकितुरभावात् ग्रन्थकारस्वहस्तांकितमूलप्रतेरलाभाच्च यत्र तत्राशुद्धपाठसम्भवः। विधेः प्रपञ्चं गुणदोषमयं। किमु अल्पमतेः तदुत्पादितस्य जनवराकस्य। तत् क्षाम्यन्तु दोषान् कृतिनः। यतः–

दोषैर्गुणाः गुणगणैरिव दोषसंघः,
सम्पूज्यते मृगदृशां दृशिगोऽञ्जनांकः।
अङ्को मृगाङ्ककलया मलया च तेन,
चन्द्रश्चिरं हि विमलां श्रियमातनोति॥

नन्दकिशोर शुक्लस्य

श्रीगणेशायनमः । श्रीरामाय नमः ।

# ॥ शिवमहिम्नः स्तोत्रम् ॥

## ( षट्पक्षीय भाष्य-सहितम् )

महिम्नः पारं ते परमविदुषो यद्यसदृशी स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः । अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥१॥

नत्वा गुरूणां चरणारविन्दं श्रीरामचन्द्रस्य च भावगम्यम् । व्याख्या महिम्नो जनसौख्यदात्री सुविस्तृतेयं क्रियते यथामति ॥ १ ॥ रम्या अत्र शुभाः प्रोक्ताः षट् पक्षा रामभाविताः । स्थित्वा हृदि तमोहत्वा स्वतेजोभिः प्रकाशिताः ॥ २ ॥ एकश्शैवो द्वितीयोवै वैष्णवः परिकीर्तितः । तृतीय पक्षो रामस्य चतुर्थः कृष्णसम्मतः ॥ ३ ॥ पंचमो ब्रह्मजीवैक्यशिक्षायाश्शुभ मिच्छताम् । षष्ठः स्त्रीपक्ष आसेव्यो जनानां रसगामिनाम् ॥ ४ ॥

पद्मा षडपि मुक्तेस्सद्वाराणीह प्रवर्तिनाम् । अपावृतानि सर्वत्र ब्रह्मजीवैक्यसाधकाः ॥ ५ ॥ गलितो हृदि सद्वृत्तो रूढो मे राम-संज्ञकः । तस्मात्पद्मफलप्रख्या मन्मुखद्वार निर्गताः ॥ ६ ॥ तान् पिबन्तु रसान् प्रेम्णा सज्जनाः साधवो मुदा । अनेक जन्म सत्पुण्यै रसिका विरचीकृतान् ॥ ७ ॥

## ॥ अथ महिम्नः श्लोका व्याख्यायन्ते ॥

अज्ञानत्कर्तृकार्याः स्तुतेरयोग्यत्वेनाज्ञाना द्ब्रह्मादीनामपि गिरां भगवद्विषये शिथिलीभूतत्वं निरूपयन् यथामति मंदं मंदं स्तुतिमारभते । महिम्न इति । हे हर हरति दुःखानि पापानि चातथा । यद्वा हरति स्वीकरोति भक्तानिति । यद्वा हरति प्रापयति स्वं लोकं मुक्तिम्वेति । यद्वा हरति प्रापयति कामानिति । यद्वा हरति नाशयति दुष्टानिति । 'हृञ्हरणे धातुः । हरणं प्रापणं स्वीकारः स्तेयं नाशनञ्चेति तस्यार्थः । फलं काचित्प्राप्तिः ममतु दुःखहरत्वेनैवाभीष्टस्त्वमिति दुःखहार कत्वेन हरेति संबोधनमित्यभिप्रायः । तव महिम्नः परमनंतं पारमत एवावि-दुषः इयदित्यजानतः पुरुषस्य स्तुतिर्यदि असदृशी अयोग्यास्ति तर्हि ब्रह्मादीनामपि त्वत्स्तुतिविषयका गिरः त्वयि स्तुत्य त्वा-वच्छिन्ने अवसन्ना इयत्तया परिच्छेत्तुमशक्ताः इयत्तया परिच्छेद्यत्वाभावादित्यर्थः । यद्वा अतिज्ञानवतां ब्रह्माण्डान्तर्गत चतुर्दश भुवननिर्माणकर्तृत्वा वच्छिन्नशक्तिमतां ब्रह्मादीनामपि यदि गिरस्त्वयि अवसन्नास्तर्हि परं पारमजानतस्सुतरामित्य-

न्वयः वागादिगोचरत्वा भावादित्यर्थः। तथा च श्रुतिः यतो वाचो निवर्तन्त अप्राप्य मनसा सहेति।यद्वा परं पूर्वस्थाव-च्छिन्नव्यतिरिक्तमित्यर्थः परमिति पूर्वपरामर्शकः महिमा-मध्यावगाहनात् परं पूर्वं वा परं न यातीति भावः। यद्वा परमेति सम्बोधनम् विदुषो विधिनिषेधप्रवर्तकस्य वेदस्य स्तुतिर्यद्ययोग्या तर्हि ब्रह्मादीनामप्याधुनिकानां गिर अयोग्या एवेत्यर्थः। ब्रह्मादीनामाधुनिकत्वं वेददृष्ट्या इति बोध्यम्॥ तदुक्तं भागवते प्रणोदिता येन पुरा सरस्वती वितन्वताजस्य सतीं स्मृतिं हृदि। स्वलक्षणा प्रादुरभूत्किलास्यतस्स मे ऋषीणामृषभः प्रसीदताम् इति। स्वलक्षणा वेदलक्षणेत्यर्थः। वेदविषये अनेकमतानिभवश्शर्वो रुद्रइत्यत्र वद्यन्ते। ननु तेषां स्तुतिर योग्या तर्हि अस्माकमपीत्याह अथेति अथानन्तरं सर्वोऽपि जनःस्वमतेः परिणामः परिपाकस्स एव अवधिर्मर्यादा यस्मिन् तद् यथा स्यात्तथा गृणन्स्तुवन् अवाच्यः अनिन्द्यः अत्र सर्वशब्दस्सकलत्वा वच्छिन्नः। तर्हि ममापि तव स्तोत्रे एषः अनेकयुक्तिसामग्रीरूपः परिकरः प्रारम्भो निरपवाद एव निर्गतोऽपवादो हरो न गृह्णात्ययं प्रसह्यैनं ग्राहयती-त्येवंरूपो दोषो यस्मात्स तथा अग्राह्यत्वे मम प्रारम्भो निर्दोष एव। अजानतो ब्रह्मादेः स्तुतेः पुराणप्रसिद्धाया यथा अग्राह्य-त्वं ममापि तथेतिभावः। अनेन स्तुतावधिकारित्वं ध्वन्यते। हरिपक्षेप्ययमेवार्थः। हरेति शिवे रूढिपदमत्रतुयौगिकं बोध्यम् अन्यत्समानम्।

## ॥ श्रीरामचन्द्रपक्षेऽप्ययम् ॥

परमेति सम्बोधनम् अपरमेति वा न परम उत्कृष्टो-यस्मादित्यर्थः । विदुषश्शास्त्रज्ञान विवेकवत्त्वेनानृत वादभीतस्य पितुराज्ञाकर्तुस्ते तव महिम्नो रामायण-रूपस्य चरितस्य पारं प्रति ब्रह्मादीनामपि गिर अवसन्नाः पारं यातुं न समर्थाः । तदुक्तं पाद्मे रावणारिकथाब्धौ मशको मादृशः कियान् यत्र ब्रह्मादयो देवा मोहिता न वदन्त्यपि इति । तर्हि ममापि स्तुतिरयोग्या अहमपि तथेत्यर्थः । अथ तैरपि भवान वाच्यो न ग्राह्यस्तर्हि ममापि तव स्तोत्रे एषः सर्वः परिकरः प्रारम्भो निरपवाद एवेत्यर्थः । किं कुर्वन् स्वमति परिणामावधिगृणन्निति पूर्व वदर्थः । चरितं रघुनाथस्य शत-कोटिप्रविस्तरम् येषां वै यादृशी बुद्धिस्तेवदन्त्येव तादृशम् इति पद्म पुराणे ॥

## ॥ श्रीकृष्णपक्षेऽप्ययम् ॥

गोपीवचन मिदम् । हरते चोरयते गोपिकानां दध्यादीनिति हर चौर यद्वा हरते आकर्षते अस्माकं मन इति हर मोहकेति किञ्चित्कोपाविष्टं वचनम् । समीपमागताः स्त्रियस्त्वरमणा-माधं दृष्ट्वाहुः ते महिम्नः कपटरूपस्य पारं परं किंभूतस्य तव अविदुषः गृहपत्यादिकं विहाय तव पादमूलं वयं प्राप्ता इत्येवं कृतं न जानाति तथा । यद्येवंभूतस्तर्हि ब्रह्मादीनामपि

त्वयि स्तुतिरसदृशी अयोग्यैव व्यर्थैव । पुनस्तेषां तथाभूता अपि गिरोऽवसन्ना निवृत्ताः । तत्साहरणे तव कपटातिशयत्वं ध्वन्यते । किं कुर्वन् स्वमतिपरिणामेति पूर्ववत् । ब्रह्मापि यावद्बुद्ध्युदयं गदित्वा स्थगितः कपटस्यान्तं तु न गत इत्यर्थः। किंच ममापि गिरोऽव्यर्था स्तव अन्यस्याः समीपगमनं ज्ञात्वाऽस्य प्रेमवार्तया किमित्येवमहमपि निराशा । अनेनास्या मानातिशयो ध्वन्यते । नन्वेवं जानास्यपि तथापि त्वत्संगं त्यक्तुं न शक्नोमि किं करोमि इत्याह अथेति अथ संगं त्यक्त्वा एषाऽहं स्त्रीजनः अवाच्यो न गर्ह्यः स्यां तदपि मम सर्वः परिकरः वचनारम्भः तव स्तोत्रे त्वत्प्रशंसा वच्छिन्नवर्तायां भवति । किं भूतः परिकरः स्त्रीजनो वा निरपवादः निर्गतः कपटरूपो दोषो यस्मात् । अहं विहाय कपटं त्वां भजे त्वं तु त्यजसीति । अत्र भक्तिरसौ सूचितौ ।

## ॥ शिक्षापक्षेऽप्ययम् ॥

कश्चित्कंचित्प्रत्याह । हरते चोरयते द्यूतादि कुसंगेन गृहद्रव्यादीनिति हर हे चौरते तव निंद्यकर्मरूपस्य महिम्नः पारं परं सर्वोत्कृष्टं । तव महन्निंद्यकर्मेति भावः । किम्भूतस्य तव अविदुषः अहमीदृशशुद्धकुलोत्पन्न इदं ममवस्तु अग्रे ममैव पुत्रादीनां वा भविष्यतीतिविवेकशून्यस्य । एवं त्वयि ब्रह्म आदिर्येषां ते ब्रह्मादयो ब्राह्मण क्षत्रिय वैश्य शूद्रास्तेषां ममापि च गिरस्त्वच्छिक्षाभूता अवसन्ना असमर्थत्वान्निवृत्ता इत्यर्थः । अथ यदि सर्वो जनः अवाच्यः त्वच्छिक्षाव्यापारशून्यस्तर्हि

एषोहमपि निरपवादः शिक्षा त्यागरूपदोषहीनः अस्य शिक्षामयं न करोतीति केऽपि न कथयिष्यन्तीत्यर्थः। किं कुर्वन् स्वबुद्ध्यादि पूर्ववत्। किं भूतोहं परिकरः परितः सर्वथा करशिक्षारूपो दंडो यस्य । अतो या तव स्तुतिरसा अयोग्या अकारो वासुदेवस्तस्य योग्येति व्यंग्यम् ।

## ॥ स्त्रीपक्षेऽर्थम् ॥

श्रीकृष्णवाक्यम् । रंतुंकाम आह हे स्तोत्रे प्रशंसायोग्येते महिम्नः प्रेममाधुर्यलावण्यादिरूपस्य पारं परं सर्वोत्कृष्टमस्ति। किम्भूतस्य तव स्त्रीजनस्य अविदुषः याथातथ्यज्ञानशून्यस्य। यदि त्वयि ब्रह्मादीनामपि स्तुतिरसदृशी अयोग्या तर्हि ममेश्वरस्यापि गिरस्त्वत्प्रशंसा रूपा अवसन्ना अयोग्याः। अहमपि त्वत्प्रशंसां कर्तुं न समर्थः मनुष्यावताराभिप्रायेणेदम्। अनेन प्रेमलावण्याद्यतिशयं शरीरस्य पञ्चभूतातिरिक्तसामग्रीनिष्पादितत्वं चेत्यनुमितिः। अथानन्तरं सर्वोऽपिजनः अवाच्यः प्रेमकटाक्षादिभिस्त्वया जड़ीकृत इत्यर्थः। अत एव मम परिकरः त्वत्सार्द्धं विहर्तुमुत्साहरूप आगमनरूपो वा प्रारम्भोस्ति तंत्वं हर सफलं कुरु इत्यर्थः। हरेति सकर्मकक्रियापदेन तमित्यध्याह्रियते। किं कुर्वन् गृणन् मया सह प्रेमहास्यरसं कुर्वन्सन्नित्यर्थः। मतेः परिणामो विकार इति मतिपरिणामः न मतिपरिणाममप्रमतिपरिणामः सुष्ठु अमतिपरिणामस्स्वमतिपरिणामः। यावन्मत्कामापूरकत्वेन मद्बुद्धेर्वैक्लव्यं माभूदित्यर्थः। किम्भतः

परिकरः निरपवादः निर्गतः अपवादो हास्यरूपो दोषो यस्मात्। अत्र युक्तिरलः सूचितः।

अतीतः पंथानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि। स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥२॥

एवं सामान्येन स्तुतिं निरूप्य महिम्नोऽपारत्वादिन्द्रियाद्यगोचरत्वं निरूपयन् यथामति विशेषस्तुतौ ह्यधिकारित्वं ध्वनयन्सगुणस्य निर्गुणस्य च महिमा सकलत्वेन न स्तुत्य इत्याह। अतीत इति। हे हर अत्र बुद्ध्याद्यगोचरत्वं निरूपितम् तत्र विशेषण संसर्गा भावत्वा वच्छिन्नत्वात्सम्बोधनाभाव इत्यभिप्रायः। तव महिमा वाक्च मनश्च वाङ्मनसी तयोः पन्थानं मार्गमपारत्वेनातीतः अतिक्रम्य स्थित इत्यर्थः तथा च श्रुतिः यतो वाचो निवर्तन्त अप्राप्य मनसा सहेति ननु एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च इत्यादिका वेदप्रसिद्धा स्तुतिः कथं संगच्छत इत्याशंक्य किञ्चिद्वेदस्तुति

विषयत्वं निरूपयन् अतिक्रमणे हेतुमाह अमितियं महिमानं श्रुतिरपि न तत् अतत् अतद्रूपाचासौ व्यावृत्तिश्च तया। अन्यदेव तद्विदितादथोऽअविदितात् । अन्यत्र धर्मादन्यत्रा धर्मादन्यत्रास्मात्कृताकृतात्स्थूलमणु इत्यादि प्रकारतः चकितं भीतभीतं यथा तथा अभिधत्ते। यतो वा इमानि भूतानि जायन्ते। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्राहिणोति तस्मैतंह देवमात्मवुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये। य आत्मनि तिष्ठन्। सत्यं ज्ञानमनन्तं ब्रह्म। यः सर्वज्ञः स सर्ववित्। इत्यादि प्रकारेण वर्णयति।

श्रुतेः सन्देहवलेन मादृशां सुतरां सन्देह इति भावः। अनन्त गुणावच्छिन्नत्वात्स न स्तुत्य इत्याह सकेति। स महिमा कस्य स्तोतव्यः सकलत्वेन स्वोतुं योग्यो न केनापीत्यर्थ इति काकुः। कृत्यानां कर्तरिवेति कर्तरि षष्ठी। किम्भूतो महिमा कतिविधा अनेक प्रकारा विश्वोत्पत्त्यादयो गुणा यत्रेति तथेति हेतुगर्भ-विशेषणम्। एवं सगुणं निरूप्य निर्गुणमाह कस्येति कस्य विषयो निर्गुणत्वान्न कस्यापीत्यर्थः। ज्ञानादि विषयो नेतिभावः। एवं निर्गुणस्तुतौ कथं प्रवर्तस इत्याशंक्याह अर्वाचीनेति अर्वन्तमंच-तीत्यर्वाक् स एवेत्यर्वाचीनोनवीनस्तस्मिन् भक्तानुग्रहार्थं लीलया धृते वृषकपालशूलडमर्वाद्युपलक्षिते तस्मिन् पदे विग्रहे कस्य मनो वचश्च न पतति न प्रविशति प्रविशति एव सर्वं स्यापीति-भावः। अनेन स्वमतिपरिणामेत्याद्युक्तमयुक्तमिति ध्वन्यते।

## ॥ हरिपक्षे ॥

गरुडशङ्खचक्राद्युपलक्षिते विग्रहे अत्यन्तसमानम् । एवं च प्रसिद्धगुणाभिधाने तव स्तुतौ ममाधिकारित्वमितिभावः ।

## ॥ श्रीरामचन्द्रपक्षेप्ययं योज्यः ॥

हे रामचन्द्र तव महिमा नतेः पारं यात इतिभावः । तदुक्तं चरितं रघुनाथस्येत्यादि । किम्भूतस्य कस्य सुखरूपस्य । किम्भूतं मार्गं त्रिकालात्मकत्वेन संशयपदत्वात्सं कल्पविकल्पात्मकत्वान्मनसः चकितं भीतियुक्तम् यं महिमान श्रुतिः कर्णोभिधत्ते सुष्ठु-धारणं करोतीत्यर्थः । अपीति निश्चये । श्रुश्रवणे धातुः श्रूयते अनयेति श्रुतिः श्रुयजीषिस्तुभ्यः इति करणेक्तिप्रत्ययः । कर्णः शब्दग्रहो श्रोत्रं श्रुतिः स्त्रीश्रवणं श्रव इत्यमरः । कथं धत्ते इत्याशंक्याह अतदिति न तत् परमार्थरूपं वस्तु इत्यतत् तस्य या व्यावृत्तिर्निवृत्तिस्तया । स महिमा कस्य स्तोतव्यः वाङ्मनसयोर्मार्गातीतत्वाब्रह्मकेनापीत्यर्थः । किं भूतः कतिविधगुणः कतिविधाः अनेकप्रकारास्समुद्रसेतुबन्धनादयो गुणा यत्रेति तथा । स महिमा अनेकजन्मपुण्यलभ्य इत्याह कस्येति कस्य विषयः कस्य अनेकजन्मसंचितशून्यस्य विषयः न कस्यापीत्यर्थः मम तु तव कृपया लभ्य एवेतिभावः । अप्यर्थे तु शब्दः । अर्वाचीने नवीने पदे धनुर्बाणाद्युपलक्षिते रामचन्द्रावतारे मनो वचोपि न पतति इदमर्थमेवावतार इति निश्चयं न करोतीति-भावः । यद्वा वने सीतावियोगकातरत्वाद्रोदनादौ पदे न पतती-

त्यर्थः । स्त्रीसंगिनामीदृशमेव दुःखमितिज्ञापयतीति पुराणादौ प्रसिद्धं तदज्ञाने किमर्थमयं रोदितीति निश्चयं न करोतीतिभावः ।

## ॥ श्रीकृष्णपक्षेऽप्ययं योज्यः ॥

अयमर्थः [गोपीवचनम् । हे श्रीकृष्ण] तव धूर्तस्य [महिमा वाङ् मनसयोः पंथानं मार्गमतिक्रान्तः कपटस्यानंत्यत्वान्न ते पारं यात इति भावः । यं महिमानं श्रुतिः कर्णोऽपि चकितं भीत भीतं यथा तथा अभिधत्ते कर्णोऽपि यं श्रुत्वा रोमांच-लक्षणेन भीतवानिव भवतीतिभावः । कथं भीतवानित्याशंक्याह अतद्इतिन तत् धूर्ततारूपमतत् लस्य या व्यावृत्तिस्तया कदाचित्त्वयि निःकपटत्वेपि धूर्तोयं कपट मेव करोतीति प्रतिभातीतिध्वनिः । स महिमा को ब्रह्मा तेनैव चतुर्मुखत्वात्स्तोतुं योग्य इति व्यंग्यम् । किम्भूतः कतिविधा अनेकप्रकारा वत्साहरणे ब्रह्मवंचनादयो गुणा यत्र यद्वा वामनाद्यवतारे बलिवञ्चनादयोयत्रेति तथा । वञ्चनादिरहितस्यास्मदादेः स्त्रीजनस्य कस्य विषयः न कस्यातीत्यर्थः । धूर्त एव धूर्तं जानातीतिध्वनिः । अर्वाचीने नवीने अस्मिन्नहनि कृते धूर्ततारूपे पदे मनो वचश्च न पतति किमपि तु पतत्येवेत्यर्थः अद्य तव धूर्तता मया ज्ञातेतिभावः ।

## ॥ शिक्षापक्षेऽप्ययम् ॥

अयमर्थः तव कुमार्गी महिमा वाङ् मनसयोर्मार्गमति-

क्रान्तः निन्दातिशयत्वादितिभावः । न तत्सुकर्म इत्यतत् तद्रूपा-चासौ व्यावृत्तिस्तया । स महिमा कस्य स्तोतव्योनिन्द्यकर्म-त्वान्न कस्यापीत्यर्थः किम्भूतः कतिविधाः मदिरापानादयो गुणा यत्रेति तथा । कस्य सुकर्मिणो विषयो न कस्यापीत्यर्थः अन्य-त्पूर्वप्रकारेणैव योज्यम् ।

## ॥ स्त्रीपक्षेप्ययम् ॥

श्रीकृष्णवाक्यम् । हे स्तोत्रे यं तव महिमानं श्रुतिः कर्णः अभिधत्ते अन्येन तव लावण्यादिके कथ्यमाने सुष्ठु श्रवणं करो तीत्यर्थः । स महिमा कस्य स्तोतव्यः न तदिदं तव मुखं चन्द्र इत्यतत् तस्य या व्यावृत्तिस्तया चकितं तथा स्यात्तथा केनापि कविना वर्णितुं न शक्य इत्यर्थः । चन्द्रादपि मुखस्याधिकाल्हा-दकारित्वं ध्वन्यते कुतः यतो वाङ्मनसयोर्मार्गमतिक्रान्तः । किम्भूतः कतिविधा अनेकप्रकारा चतुरतादयो गुणा यत्रेति तथा पुनः किम्भूतः कस्य विषयः कं सुखं तेन सह वर्तते सकस्तस्य विषयो योग्य इत्यर्थः । एवं च लावण्याद्यतिशयं पा-वनत्वञ्चेतिध्वनिः । अर्वाचीने नवीने नवीनावस्थां यौवनं प्राप्ते अस्मिन्तव पदे विग्रहे भूषणाद्युपलक्षिते कस्य धन्यस्य मनो वचश्च न पतति न लग्नो भवति भवत्येवेत्यर्थः सर्वोपि जन-स्त्वां कथंचिद् दृष्ट्वाहर्निशं त्वामेव कथयतीत्यर्थः ॥२॥

**मधुस्फीता वाचः परमममृतं निर्मि-तवत स्तव ब्रह्मन् किम्वागपि सुरगुरो-**

विस्मयपदं । मम त्वेताम्वाणीं गुणकथनपुण्येन भवतः पुनामीत्यर्थेऽस्मिन्पुरमथन बुद्धिर्व्यवसिता ॥३॥

एवं तेषामिन्द्रियादिगोचरत्वेन स्तुति विषयत्वात्कृतस्तुत्युत्पन्नपुण्येन स्ववाण्या नैर्मल्यफलातिशायं स्तुवन् कथयति मधुस्फीतेति । हे ब्रह्मन् अत्र वेदाविर्भावकत्वेन सर्वेश्वर स्ववर्णने ब्रह्मन्निति सम्बोधनं युक्तमेवेत्यभिप्रायः । सुराणां मध्ये श्रेष्ठो ब्रह्मा तस्याप्यतिचमत्कृता वाक् किं तव विस्मयपदं विस्मयोत्पादकं अपि तु नेत्यर्थः । यथा दिवा खद्योतस्स्वप्रकाशसामर्थ्यं न करोति तथा वागपि विस्मयोत्पादकसामर्थ्यं न करोतीति भावः । किम्भूतस्य तवेति हेतुगर्भविशेषणम् । परममृतं निरतिशयामृतमेवंभूता वेदलक्षणा वाचो निर्मितवतोऽप्रयासेनाविर्भावितवतः किम्भूता वाचः मधुस्फीताः यज्ञादिना स्वर्गादिनिष्ठफलभोगातिशयबोधकत्वेन माधुर्यादिगुणास्ते एव स्फीताः प्रवृद्धाः यस्यां सा तथा । यद्वा मधु इति भिन्नपदम् तथाच ब्रह्मणो वाक् श्रुत्यर्थानुयायित्वान्न चमत्कारकारणीति भावः । स्फायीवृद्धौ धातुस्तस्मात् क्तप्रत्ययः स्फायः स्फीनिष्ठायामिति स्फीत्यादेशः । त्वत्कृपयैव ब्रह्मणो वाचि चमत्कारित्वमिति च ध्वनिः । तथाचश्रुतिः यतोइमानि भूतानि जायन्ते यो ब्रह्माणं विदधाति पूर्वम् यो वै वेदांश्च प्रहिणोति तस्मै

इति । नन्वेवमस्त्वस्तु मम तु स्तुत्या लाभ एवेति आह पुरमथ-नेति सम्बोधनम् गुणनाम तथा च त्वद्गुणानुवादेनैव बुद्धिम्प-वित्रयामीत्यभिप्रायः । हे पुरमथन पुरस्त्रिपुरो मथ्यते येन तथा एतां पूर्वं स्तुत्यनाकांलात्वेनापवित्रां वाणीमिदानीम्भवतो यद्गुणानां कथनं तेनोद्भवेन पुण्येन पुनामि पवित्रयामीत्यभि-प्रायेणास्मिन्नर्थे स्तुतिकरणरूपे मम बुद्धिर्व्यवसिता कृतनिश्च-येत्यर्थः । न स्तुत्या किंचिदैश्वर्यादिकं याचे इति भावः ।

## ।। हरिपक्षे ।।

पुराणां शरीराणां निवारक मोक्षद इति सम्बोधनार्थः अन्यत्समानम् ।

## ।। श्रीरामचन्द्रपक्षेप्ययम् ।।

पुराणां रावणादिदेहानां मथन यद्वा पुरो लङ्कापुरस्तस्य मथनो हनुमान् स विद्यते दास्यभावेन यस्येति मत्वर्थीयोऽच् यद्वा पुरमथनो महादेवः सुभक्तत्वाद्विद्यते यस्य यद्वा पिपर्ति पाति विवेकज्ञानेन लोकमिति पुरं शास्त्रं तन्मथ्यते विचार्यते येन तथा हे पुरमथन रामचन्द्र हे ब्रह्मन् तव मायामानुषस्य ब्रह्मणः अहो मे पश्यताज्ञानं त्विम ूढस्य दुरात्मनः यद्ब्राह्मण-कुले रूढं हतवान् कामलोलुपः इत्यादि वाक् सुरगुरोर्ब्रह्मणः किं विस्मयपदं न अपि तु निश्चयेन ब्रह्मणोपीत्यर्थः । ब्रह्मापि विचारयन्नजानाति किमस्यास्तात्पर्यमिति । किम्भूतस्यसुरगुरोः

मधुपरममसृतं वाचोवेदलक्षणास्तव स्तुतिरूपा निर्मितवतः आविर्भावितवतोऽपि । यद्वा तचेत्यस्य विशेषणम् किमर्थं निर्मितवतः भवतो गुणकथनपुण्यनिमित्तं रामायणचरित्रस्य कथनपुण्यनिमित्तमित्यर्थः । निमित्तात्कर्मयोगे इति सप्तमी । ननु यत्रब्रह्मादि न जानाति तत्र किमस्मदादीनां गणना इत्यत आह ममत्विति मम तु एतां वाणीं पुनामीत्यभिप्रायेणेव अस्मिन्नर्थे तवस्तुतिकरणे एव बुद्धिर्व्यवसिता कृतनिश्चया नतु तात्पर्यविचारे इत्यर्थः ।

## ॥ श्रीकृष्णपक्षेऽन्वयः ॥

गोपिकावाक्यम् । गर्गवाक्येन ब्रह्म ज्ञात्वा ब्रह्मन्निति सम्बोधनमाह हे ब्रह्मन् तव मायाविनः कपट रूपा वाक् किं ब्रह्मणो विस्मयोत्पादकं न अपि तु ब्रह्मणो पीत्यर्थः किम्भूतस्य तव-स्वगृहपत्यादिकं त्यक्त्वा या मामभजन्तासां युष्माकं बहुकालेनापि प्रत्युपकारं कर्तुं न शक्नोमि अतो युष्मत्सौशील्येनैव ममानृण्यं भवतु इत्याद्युक्त्या मधुपरमं कपटातिशयत्वोत्कृष्टं असृततुल्यं वाचो निर्मितवतः अस्माकं गोष्ठीमध्येकथयतः यथा मृतमसृतं जीवयति तथा कामकश्मलचित्तत्वेन मृततुल्या जड़ा अस्मदादीःसुजयतीति असृत तुल्यता ब्रह्मणो विशेषणं तत्र पूर्ववद्योज्यम् । नन्वेवंतर्हि किं मम वार्तां ब्रूषे इत्यत आह पुरमथनेति पुराणामस्मदादिशरीराणां कामोत्पादकत्वेन मथन संतापन । मम तु एतां वाणीं पुनामीत्यभिप्रायेणैव भवतो गुणकथन-

पुण्यार्थं अस्मिन् गुणकथनरूपार्थे बुद्धिर्व्यवसितेत्यर्थः अयत्नमे लाभ इति भावः।

## ॥ शिक्षापक्षेऽर्थः ॥

ब्राह्मणत्वेन ब्रह्मन्निति सम्बोधनम् तवातिनिन्द्य कर्म वर्द्धतीति विस्मयपदम् किमन्येषामित्यर्थः अन्येषामिति शेषः। किम्भूतस्य तव परममृतं कुकर्मिणां निरतिशयामृततुल्यं एवंभूता मधुस्फीता वाचः निर्मितवतः मधुना मद्येन स्फीताः प्रवृद्धा वृद्धियुक्ता इत्यर्थः। मधु मद्यं मधु क्षौद्रं मधु पुष्परसं विदुः मधुर्दैत्यो मधुश्चैत्रो मधूकोपि मधुर्मतः इत्यनेकार्थः। नन्वेवं तर्हि किं शिक्षयसीत्यत आह पुरमथनेति आधाराधेयत्वेन पुरसदृशस्य कुलस्य मथनेति सम्बोधनार्थः अप्यर्थेतु शब्दो भिन्नक्रमः एतां भवच्छिक्षा युक्तां वाणीं भवतोपि वाणीं मीश्वरगुणकथनात्पुण्येन पुनामि निर्मलां करोमि इति हेतोरस्मिन् त्वच्छिक्षा रूपेऽर्थे बुद्धिर्व्यवसिता। अनेन परंपरया ब्रह्मजीवैक्यकरणेऽस्य प्रतिज्ञा ध्वनिता।

## ॥ स्त्रीपक्षेऽर्थः ॥

श्रीकृष्णवाक्यम्। कामविक्षिप्तचित्तत्वाद् ज्ञाना भावे स्त्रियामपि ब्रह्मन्निति सम्बोधनं तव हास्यरुचिरा वाक् ब्रह्मणोपि विस्मयपदं किमस्मदादीनामन्येषामिति शेषः। त्वद्वाचं श्रुत्वा ब्रह्मापि कामार्दितो भवतीति भावः। किम्भूतस्य तव स्त्रीजनस्य मनोभिरामत्वेन मधुभोगिनां चैतन्यकारकत्वेन परममृतमेवं-

भूताः स्फीताः प्रेमप्रवृद्धा वाचो निर्मितवन्तः । यदि ब्रह्मापि कामार्दितो भवति तर्हि तत्सृष्टिसृष्टानामस्मदादीनां का वार्तेति ध्वनिः । ननु मां किमतिप्रार्थयसे इत्यत आह पुरमथनेति पुरस्य देहस्य कामातापकत्वेन संतापनेति सम्बोधनार्थः । मम तु एतां कामकश्मलचित्तत्वेनासंवलितात्मरां वाणीं भवतः पुण्यं यद्गुणकथनं तेन पुनामि संस्करोमीति हेतोः अस्मिन्ननुनयरूपेऽर्थे बुद्धिर्व्यवसिता इत्यर्थः । त्वामनुनीय कामव्यथां दूरीकृत्य यथास्थितबुद्धेः प्रकाशं करिष्यामीति भावः ॥

तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत त्रयी वस्तुव्यस्तम् तिसृषुगुणाभिन्नासु तनुषु । अभव्यानामस्मिन् वरद रमणीयामरमणीं विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥४॥

एवं सहेतुकां तेषां स्तुतिं निरूप्य ये केचिद्विषयिणो जडबुद्धयस्तवैश्वर्यानवबोधास्तान्निराकुर्वन्स्तौति तवैश्वर्यमिति । वरानभीष्टकामान्ददातीति तथा हे वरद अभीष्टप्रद ये त्वन्निन्दकास्तेभ्योऽशुभंददासि ये त्वत्पूजकास्तेभ्यश्शुभं इत्यस्मिन्नवसरे वरदेति सम्बोधनंयुक्तमेव । इह संसारे एके जडधियो मंदमतयः यत्तव ऐश्वर्यं तद्विहन्तुंनिराकर्तुं व्याक्रोशीं साक्षेपमुच्चैर्भा-

षणं विदधते कीदृशमैश्वर्यं जगत् आकाशादि प्रपञ्चस्तस्योदयं सृष्टिं रक्षां प्रलयं संहारं च करोतीति तथा । ननु तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशम् भवति । तस्माद्वा एतस्मादात्मनः आकाशस्सम्भूत इत्यादि श्रुतेः । कथं ब्रूषे तवैश्वर्यं करोतीतिचेत्सत्यम् यतो इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयंत्यभिसंविशन्ति । यतः सर्वाणि भूतानि मन्वन्त्यादियुगागमे यस्मिंश्च प्रलयंयान्ति पुनरेव युगक्षये इति श्रुतिस्मृतिभ्यां तवैव ऐश्वर्यं करोतीत्यदोषः । न च त्वत्तो भिन्नं चैतन्यमिति भावः । पुनः कीदृशम् तवेच्छामायाकार्यैः सत्व रजस्तमोभिर्गुणैर्भिन्नासु तिसृषु त॰॰॰ ब्रह्माविष्णुमहेशेषु व्यस्तं भिन्नं भिन्नं प्रकटीकृतमित्यर्थः । अने॰॰ ब्रह्मादित्रयाणामैक्यं ध्वन्यते तथा च स्मृतिः सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एष इहास्य धत्ते । स्थित्यादये हरिविरंचि हरेतिसंज्ञाः श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युः इति । पुनः कीदृशम् त्रय्या वेदत्रयस्य वस्तु वेदवाच्यम् वेदास्तमेव प्रतिपादयन्तीतिभावः। किम्भूतां व्याक्रोशी अस्मिन् त्रैलोक्येपि नास्ति भव्यं कुशलं येषां ते) अभव्यास्तेषां रमणीयां मनोहराम् भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् इत्यमरः । तथा वस्तुतोऽरमणीयाम् विदधत इत्यात्मनेपदेन, स्वस्मिन्नेव क्रियाफलत्वात्तेषामेवाधःपातो नतु ऐश्वर्यहानिरिति भावः ।

## ॥ हरिपक्षेऽप्ययम् ॥ श्रीरामचन्द्रपक्षेऽप्ययम्

वने कामकश्मलचित्तया सूर्पणखया वरत्वे याचितो लक्ष्मणं वरं पतिं ददौ ज्ञापयाञ्चकारेति तथा यत्तवैश्वर्यमुदयं तच्छिन्तुं निराकर्तुमिह संसारे एके तु जड़धियश्शत्रवो व्याक्रोशीमुच्चैर्भापणं विदधते यद्वा ऐश्वर्यं शंखचक्रगदादि तन्निराकर्तुं जड़बुद्धयः काशिराजादयः सामर्षत्वेन युद्धाय व्याक्रोशीमतिनिन्द्यां विदधते कुर्वते इत्यर्थः अतिमानुषम् कर्म दृष्ट्वापि हन्तुमिच्छन्ति इति जड़बुद्धित्वं युक्तम् । किं भूतम् जगदुदयरक्षाप्रलयकृत् अयमर्थः संसारे द्विविधा जनाः कुशला अकुशलाश्च सुरा असुराश्च तत्र ये सुरा इन्द्रादयस्तेषामुदयं वृद्धिं रक्षाञ्च करोति ये तु असुरा रावणादयस्तेषां प्रलयं संहारं करोतीति तथा । यद्वा यस्य श्रवणे एव जगतां स्वजनानामुदयमानन्दोदयं ये दुष्टपीड़िितास्तेषां रक्षा च ये दुष्टाश्शत्रवस्तेषां प्रलयरूपा मनोव्यथा च भवति । यद्वा विषयिणो मुमुक्षवो भक्ताश्चेति त्रिविधास्तत्र ये विषयिणस्स्वजनास्तेषामुदयं विषयोदयं ये मुमुक्षवस्तेषां रक्षा ये भक्ता आरण्यकादय स्तेषां तस्मिन् प्रकर्षेण लयोमोक्षश्च भवतीत्यर्थः । यद्वा उत्तममध्यमनिकृष्टाश्चेति त्रिविधास्तत्र ये उत्तमा वाल्मीक्यादयस्तेषामुदयं यशोदयं ये मध्यमास्सामान्य प्रजास्तेषां षष्ठांशादानेन रक्षा ये निकृष्टास्सुबाहुमारीचादयस्तेषां प्रलयं चेत्यर्थः । यद्वा गच्छन्ति अयोध्यायां तमनु इति जगतस्स्वभ्रातरो लक्ष्मणादयस्तत्र लक्ष्मणस्य मेघनादस्य युद्धे

अयेनोदयं यशोदयं शत्रुघ्नस्य शिवसंगरे रक्षा भरतस्य स्वागमनेन दुःखनाशाद्दुःखस्य प्रलयमित्यर्थः । पुनः कीदृशम् गुणैस्स्वस्वकर्मभिर्भिन्नासु तनुषु भरतलक्ष्मणदेवादयोऽसुरा यत्रा वा तेषु विभक्तमित्यर्थः । अभक्तानां सुबाहुमारीचादीनां व्याक्रोशीं यस्ते साक्षेपमुच्चैर्भाषणं विहन्तुं नाशं कर्तुं तवैश्वर्यं मूर्यूदयं एके अजड़धियो विश्वामित्रादयो विदधते धारणं कुर्वते तवैश्वरस्वज्ञाने अजड़बुद्धित्वं युक्तम् । यद्वा किम्भूतम् तिसृषु गुणभिन्नासु तनुषु व्यस्तं यथा तथा जगदुदयरक्षाप्रलयकृदित्यन्वयः ब्रह्मरूपेण जगत उदयं विष्णुरूपेण रक्षां पालनं रुद्ररूपेण संहारं च करोतीति तथा । अन्यत्समानम् ।

## ॥ श्रीकृष्णपक्षेऽर्थम् ॥

रासक्रीड़ायां गोपिकाभ्यो वरानभीष्टान्मनोरथान्ददातीति तथेति सम्बोधनार्थः । यत्तवैश्वर्यं माया कपटादि तद्विहन्तुं दूरीकर्तुं एके जड़बुद्धयः अस्मदादयो व्याक्रोशीं साक्षेपमुच्चैर्भाषणं विदधते कुर्वत इत्यर्थः । त्वांम्मायाकपटिनं जानन्नपि कपटं हापयितुं बहु प्रलापं करोमीति मंदबुद्धित्वं युक्तमेव । किम्भूतम् जगति उदयं रक्षां प्रलयं च करोतीति तथा कपटमाविश्य कस्याश्चिद्विहारदानेन उदयं काम व्यथाहारकत्वेन रक्षाञ्च करोषि कस्याश्चिद्दुःखसागरमग्नत्वेन प्रलयतुल्यं सुखनाशं करोषि । पुनः किम्भूतम् गुणेभ्यस्स्वस्वकर्मभ्यो भिन्नासु तनुषु कृष्णराम बामनेषु व्यस्तं प्रकटीकृतम् रामावतारे छलमाविश्य

घालिनम्बिव्यधे वामनरूपेण वलिमवञ्चयत् इति श्रुतमस्मिन्नवतारे अस्मदादिभिः साक्षाद्दृष्टमेव । पुनः किम्भूतम् त्रय्या वेदत्रयस्य वस्तु वेदार्थानुयायिपुराणादौ कथितमित्यर्थः। किम्भूताम् व्याक्रोशीम् नास्ति भव्यं कुशलंयेषां तेषां धूर्तानां रमणीयाम् वस्तुतो अरमणीयाम् इत्यर्थः ।

## ॥ शिक्षापक्षेप्ययम् ॥

स्त्रीणां वरान् मनोरथान्ददातीति तथेतिसम्बोधनार्थः निन्द्यकर्मरूपं तत्तवैश्वर्यं तद्विहन्तुं निराकर्तुं एके अजड़धिय अस्मदादयः व्याक्रोशीं विदधते किम्भूतम् जगति परद्रव्याद्यपहरणे उदयं मनोत्साहं तद्योगेन देहरक्षां अन्यैर्ज्ञाते प्रलयं च करोतीति यथा । पुनः किम्भूतम् गुणैर्भिन्नासु तिसृषु भूतभविष्य वर्तमानासु तनुषु त्रयीवस्तुभिर्वेदवस्तुभिर्व्यस्तं ज्ञात मित्यर्थः । अस्मिन् जन्मनि यद्दृष्टं कुशलाकुशलं 'कर्म तादृशं भूतेपि भविष्येपि इतिवेदार्थानुयायिपुराणैर्ज्ञातमित्यर्थः । किम्भूतामव्याक्रोशीम् अभव्यानां निन्द्यकर्मयुक्तानां दुष्टानामनोहरां तद्व्यतिरिक्तानाम मनोहरामित्यन्वयः ।

## ॥ स्त्रीपक्षेप्ययम् ॥

रुक्मिणीम्प्रति श्रीकृष्णवाक्यम् । हे वरदस्त्रीजन वरं मनोऽभीष्टं पुरुषाणां ददातीति सम्बोधनार्थः । एके जड़धियो जना

व्याक्रोशीस्विद्धते इदमपि न तव महत्त्वलाघव्यादिना सम-
मिति साक्षेपमुच्चैर्भाषणं कुर्वते। किं कर्तुम् तवैश्वर्यं सौन्दर्यं
विग्रहमिवहन्तुम्प्राप्तुमित्यर्थः। त्वामप्राप्तुमेव प्रशंसां कुर्वत इति
भावः हनहिन्सागत्योः। यत्त्रयीवस्तु वेदे कथितं वस्तु यज्ञा-
दिना स्वर्गं गच्छेदमृतपानादिभोगंकुर्यादिति तदिह तव विग्रहे
अस्तीत्यन्वयः। स्वर्गतुल्यं भोगातिशयप्रदस्तव विग्रहः अमृत-
पानं तव वाक्यामृतस्य शास्त्रस्य पानं श्रवणं तवा मृतस्य
पानस्येति स्वर्गतुल्यता किम्भूतम् तवैश्वर्यं जगतां जनानां
भोगप्रदानेन उदयं काम्यव्यथाहारकत्वेन च रक्षा भोगाप्राप्तौ
प्रलयमिव मनोव्यथा च तत्करोतीति तथा। पुनः गुणैस्सत्वर-
जस्तमोभिर्भिन्नासु तिसृषु तनुषु गायत्री सावित्रीसरस्वतीषु
व्यस्तम्प्रकटीकृतम् अनेन महत्सौन्दर्यातिशयं ध्वन्यते। सर्वाः
स्त्रियस्त्वमेवेति च ध्वन्यते। विद्यास्समस्तास्तव देवि भेदाः
स्त्रियः समस्तास्सकला जगत्सु इतिमार्कण्डेयपुराणोक्तेः।
किम्भूताम्व्याक्रोशीं अकारो वासुदेवस्स एव भव्यं कुशलं येषां
ते अभव्यास्तेषां रमणीयाम् अन्यवार्ता तेषां न रोचत इत्याशयः।
अन्येषां तु अरमणीयाम्॥

किमीहः किंकायः स खलु किमुपाय-
स्त्रिभुवनं किमाधारो धाता सृजति
किमुपादान इति च। अतर्क्यैश्वर्ये

त्वय्यनवसरदुःस्थो हतधियः कुतर्कोऽयं
कांश्चिन्मुखरयति मोहाय जगतः ॥५॥

यदुक्तं व्याक्रोशीमिति स दुष्टधियां नाशाय भवतीति वदन् सिद्धान्तं स्तौति किमीति। हे वरदेति पूर्वतोऽनुषज्यते दुष्टधियां कुशलमकुशलं वा किमपि न करोषि तेषां स्वकर्मभिरेव नाशो भवतीति ससंबोधनाभावरूपाभिप्रायः। त्वयि तर्कागोचरे ब्रह्मणि अयं कुतर्कः कुत्सितस्तर्कः कुतर्कः निरंकुशत्वात्स्वातन्त्र्येणोपस्थित तत्वेन तर्काभास इत्यर्थः। कांश्चित्हतधियः हता पूर्वकर्मविपाकेन नष्टा धीर्धारणावती बुद्धिर्येषां तान् धीर्धारणावती मेधा इत्यमरः। दुष्टमतीनित्यर्थः। जगतो जंगमान्मोहाय नाशाय मुखरयति वाचालान् करोति। किम्भूते त्वयि अतर्क्यं ऐश्वर्यं यस्य तर्कागोचर इत्यर्थः। सर्वतर्कागोचरे स्ववादकुशलत्वेन स्वबुद्ध्या तर्काभासं कुर्वत इति तेषां नाशो युक्तमेवेति ध्वनिः। कुतर्कमेवाह किमीह इत्यादिना खल्विति प्रसिद्धौ स धाता त्रिभुवनं सृजतीति सिद्धान्तमनूद्य तत्र दूषणमाह किमीहः का ईहा चेष्टा यस्य तथा कः कायः कर्तृरूपं शरीरं यस्य तथा कः उपायः सहकारिकारणं यस्य तथा क आधारोऽधिकरणं यस्य। अधिकरणं षड्विधमौपश्लेषिकम् सामीपिकं अभिव्यापकं वैषयिकं नैमित्तिकं औपचारिकं चेति। किमुपादानं समवायि कारणं यस्य यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् यथा

स्मृतिः त्वं पुमान् पुरुषः साक्षादीश्वरः प्रकृतेः परः कर्ता हर्ता पिता धाता निर्गुणः स्वेच्छया गुणी इति। स धाता किमीहः किंकायः किमुपायः किमाधारः किमुपादानः यद्वा धाता त्रिभुवनं सृजति स च त्वत्प्रसादं विना किञ्चिदपि कर्तुं न समर्थः तदुक्तम् प्रचोदिता येन पुरा सरस्वती वितन्वताजस्य सतीं स्मृतिं हृदि। स्वलक्षणा प्रादुरभूत्किलास्यतस्स मे ऋषीणामृषभः प्रसीदतामिति।

## ॥ श्रीकृष्णपक्षेप्ययं योज्यः ॥

अत्रास्याः क्रोधवश प्राप्तत्वेन विस्मृतत्वात्सम्बोधनाभावः। योयं विधाता त्रिभुवनं सृजति स अतर्क्यमैश्वर्यम्मायाकपटादि यस्य तस्मिन्त्वयि कांश्चित् जगतः अस्मदादीन्मुखरयति कस्मै प्रयोजनाय मोहाय ममायम्पतिरहमेवास्य दयिता इत्यज्ञानायेत्यर्थः। तव तु न कापि दयितेतिभावः किम्भूतान् हतधियः ईदृशं त्वां जानन्नपि तव मायाकपटहास्यरसेन प्रेमवशम्प्राप्ता इति भावः। अत्रार्थे विधाता कामचार इति ध्वनिः किम्भूतः नास्ति अवसरे सृष्टि समये दुःखेन स्थितः पुनः कुत्सितस्तर्को विचारो यस्य सःस्वयं तु सुखी अस्माकं व्यथां न जानातीतिध्वनिः इति हेतोः सः किमीहः का ईहा चेष्टा यस्य स इत्यादि एतत्सर्वं तस्य चेष्टादिकं निन्द्यमिति भावः। अनेनास्याःक्रोधातिशयो ध्वन्यते।

तन्तवः पटस्य । अतर्क्यैश्वर्य इत्यनेन सर्वोऽयं कुतर्कः परिहृतस्त-दाह अनवसरेति नास्ति अवसरोऽवकाशो यस्य अतएव दुःस्थः दुष्टत्वेन स्थित इत्यर्थः । ईश्वरत्वानीश्वरत्वे जगत्कर्तुः कुलालेन तुल्यता यथा कुलालश्चेष्टादिकं विना घटादिनिर्माणेऽनीश्वरः एवं सोऽपि तथा चेष्टाद्यंगीकारे ईश्वरत्वं गतम् अनंगीकारे कर्तृत्वं गतं तदेवमुभयतः पाशारज्जुरित्येवंरूप कुतर्क इत्यर्थः ।

## ॥ हरिपक्षेऽप्ययम् ॥ ( श्रीरामचन्द्रपक्षेऽप्ययम् )

अतर्क्यत्वस्य वाङ्मनसयोरगोचरत्वादत्र सम्बोधनाभावः अतर्क्यैश्वर्येत्वयि लोकशालनादौ व्यग्रचित्तोभूत्वास्माकं रावणादिवधरूपं कार्यं न करिष्यतीत्ययं कुत्सितस्तर्कः कांश्चित् जगत इन्द्रादीन्मोहाय ईश्वरत्वाज्ञानाय मुखरयति परस्परं वाचालान् करोतीत्यन्वयः । अतएव तैः कैकेय्या बुद्धिभंगःकृत इति भावः । किम्भूतः अनवसरदुःस्थः नास्ति अवसरे दुःस्थः दुष्टत्वेन स्थितः अवसरश्च रामचन्द्रस्य प्रातःकालीनराज्यसमयस्तस्मिन् योग्य एवेत्यर्थः । किम्भूतान् अहतधियः न नष्टा शास्त्रे बुद्धिर्येषां तान् । यद्वा हतधियः अयमस्मदर्थ एव कृतावतारत्वादयमस्माकं कार्यं करिष्यत्येवेतिनिश्चये हता नष्टा बुद्धिर्येषां तानित्यर्थः । अतर्क्यत्वमेवाह धातेति धाता सम्भवान् त्रिभुवनं सृजति स्थितौ पालयति अन्ते ग्रसतीत्यप्युपलक्षणत्वाद्बोध्यम् अनेनास्य ब्रह्मत्वं ध्वन्यते खल्विति प्रसिद्धौ तथा च

## ॥ शिक्षापक्षेऽर्थः ॥

किञ्चित्कोपक्षुभितत्वात्सम्बोधनाभावः त्वयि अयं कुतर्कः कुत्सितो विचारः कत्यनम्बा कांश्चिज्जगतो मुखरयति वाचालान् करोति किम्भूते अतर्क्यमैश्वर्यं निन्द्यकर्म यस्य तस्मिन् कस्मै प्रयोजनाय मोहाय तव नाशोऽनेनैव भविष्यतीति भावः। यद्वा मोहाय निन्द्यकर्मविस्मृतये किम्भूतानहतधियः न हता सुकर्मसु धीर्येषां इति हेतोः मुखरयतीति हेतुगर्भविशेषणम्। किम्भूतः कुतर्कः नास्ति अवसरे अवकाशोदुष्टत्वेन स्थितः कुतर्कस्य निन्द्य कर्मणि त्वय्यवकाश एवेत्यर्थः इति हेतोस्सर्व-निन्द्य कर्माणि त्यक्त्वा रामचन्द्रम्भजेतिध्वनिः तम्बिना,यो धाता त्रिभुवनं सृजति सोऽपि किमीह इत्यादि तम्बिना किञ्चित्कर्तुं न समर्थ इत्यर्थः ।

## ॥ स्त्रीपक्षेऽर्थः ॥

श्रीकृष्णवाक्यम् । तया साकं हास्यादिना स्वभाग्यातिशय-मित्यत आह किमीह इति। अतर्क्यमैश्वर्यं सौन्दर्याद्यतिशयं यस्यास्तथेति सम्बोधनार्थः हे अतर्क्यैश्वर्ये यो धाता त्रिभुवनं सृजति सत्वयि कांश्चिदस्मदादीन्पुरुषान्मोहाय त्वद्वशप्राप्तये मुखरयति प्रेमहास्यादिना वाचालान् करोति। किम्भूतान् हत-धियः प्रेमकामाग्निना नष्टाधीर्येषां तान् अतएव जगतः गच्छन्ति त्वत्समीपमिति जगतः गम्लृ गतौ धातोः क्विप्प्रत्ययः । किम्भूतः अनवसर दुःस्थः अवसरे सृष्टिसमये दुःखेन न स्थितः पुनः

कुतर्कः कौपृथिव्याम् तर्क्यते इति तथा इतीति किम् तर्कमेवाह किमीह इत्यादि ब्रह्मणो विशेषणम् त्वद्विग्रहविसर्गे अयं किमीहः का ईहा चेष्टा यस्य सः कः कायः कर्तृत्वयुक्तो विग्रहो यस्य क उपायस्त्वद्विग्रहविसर्गे सामग्री यस्य सः क आधारो यस्य यम-धिष्ठाय त्वद्विग्रहमसृजत् क उपादानो बुद्धिर्यस्य सः उप समीपे आदीयते बोध्यते अनेकजन्मस्मृतिर्य या बुद्ध्येत्यर्थः डुदाञ् दाने धातुस्तस्मात् करणे ल्युट् प्रत्ययः अहो तव सौन्दर्याद्यतिशयं विधात्रा त्वंदर्शिता इति प्रेमकामकश्मलचि-त्तानामस्माकमहोभाग्यातिशयश्चेति भावः ॥५॥

अजन्मानो लोकाः किमवयववन्तोऽपि जगता मधिष्ठातारं किम्भवविधिरना-दृत्य भवति । अनीशो वा कुर्याद्भुव-नजनने कः परिकरो यतो मन्दास्त्वा-म्प्रत्यमरवर संशेरत इमे ॥६॥

एवमुक्तं कुतर्कं परिहरन् मूढानामपि ज्ञानोदयञ्च ध्वनय-न्सुतर्कमुद्भावयन्स्तौति अजन्मान इति । हे अमर वर न म्रियन्ते इत्यमरा इन्द्रादयो देवास्तेषां वरामनोरथा यस्मात्तथा । यद्वा अमराणाम्मध्ये वरः श्रेष्ठस्तथा । अमरा निर्जरा देवास्त्रिदशा विबुधास्सुरा इत्यमरः अचेतनान् क्षित्यादीनाविश्यत्वमेवचेतय-

श्रीति तेषां त्वमेवाभीष्ट इत्यमर वरेति सम्बोधनं युक्तमेव। अवयवास्तन्मात्राणि सूक्ष्माणि तानि विद्यन्ते येषां ते तथा सावयवा इत्यर्थः तदस्यास्त्यस्मिन्निति मतुप्प्रत्ययः मादुपधायाश्च मतोर्वो यवादिभ्य इमि मतुपो मस्य वः। सावयवा अपि लोकाः पृथिव्यपुतेजोवाय्वाकाशाः किमजन्मानः,न जन्म येषां ते अजन्मानो जन्मरहिता इत्यर्थः अपि तु जन्मसहिता एव। लोकयन्त इति लोका दृश्या द्रष्टा त्वन्य एव तथा च यद्दृश्यं तदसत् यो द्रष्टा ईश्वरस्सतु सदेवेति ध्वनिः। ननु सावयवानां नित्यत्वं निरवयवानामनित्यत्वं स्यादित्या शंक्याह अपीति सावयवा अपि अनित्या इति भावः। लोकदर्शने भावे घञ् एवं जगताम्भवविधिः भवतीति भव उत्पत्तिस्तस्य यो विधिर्व्यापारः भूसत्तायाम् पचाद्यच् विधानं .विधिः डुधाञ्धारणपोषणयोः उपसर्गेघोः किरिति किप्रत्ययः स अधिष्ठातारं जगत्कर्तारमनादृत्य अनपेक्ष्य भवति अपि तु अपेक्ष्यैवेत्यर्थः तेषामचेतनत्वादिति भावः। न ईश अनीश ईश्वर भिन्नः क्षित्यादिर्यदि विश्वरचनां कुर्यात्तर्हि भुवनजनने चतुर्दशलोकानामुत्पत्तौ कः परिकरः सामग्री न कोपि) सामग्र्यभावे न तस्य जनकसामर्थ्यमीश्वरस्तु सामग्र्यभावेपि विचित्रंस्वशक्त्या सर्वं कुर्यादिति भावः। एवम् सुतर्कमुद्भाव्य दोषान्निराकुर्वन्नुपसंहरति यत इति। यतस्सर्वप्रमाणसिद्धस्त्वमतो इमे मन्दा अज्ञानिन स्त्वामीश्वरं संशेरते तत्वतस्त्वां न जानन्ति। स्वपूर्वकर्मविपाकेन कदापि न एषां ज्ञानोदय इति ध्वनिः। हरिपक्षेपि समानम्।

## ॥ श्रीरामचन्द्रपक्षेऽन्वयम् ॥

हे अमर वर रामचन्द्र अमराणां वरो यस्मादितिसम्बोधनार्थः । इमे लोका अयोध्यावासिनः किंत्वाम्प्रति संशेरते तत्र-तस्त्वामीश्वरं न जानन्ति,अपि तु जानन्त्येव । कुत इत्यत आह यत इति भुवनानां जननमुत्पत्तिर्यस्मात्तस्मिन्त्वयि रामचन्द्ररूपे यतो अमन्दास्त्वद्विषयक ज्ञानवन्त इत्यर्थः । किम्भूताः अवयव-वन्तः प्रशस्तावयववन्त इत्यर्थः । पुनः अजन्मानः न जन्म विद्यते येषां ते त्वां ज्ञात्वा एषां जन्म न भविष्यतीत्यर्थः जीवन्मुक्ता इति यावत् । एवं भवविधिरपि जगतामधिष्ठातारं कर्तारं त्वामना-दृत्य किम्भवति अपि त्वादृत्यैव । भवे संसारे विधिर्यज्ञादिवि-धिरित्यर्थः यज्ञादिनां त्वमेव फलदातासीतिभावः न ईशो यस्य स अनीशस्स्वधर्महीनोपि कश्चित्पुमान् यदि त्वदादरं कुर्या-त्तर्हि कः परिकरः मुक्तये कान्या सामग्री अस्ति किन्तु त्वदादरं त्वद्भक्तिरेव वा शब्दः कटाक्षे ॥

## ॥ श्रीकृष्णपक्षेऽन्वयम् ॥

काश्चिदन्या विहारलक्षणदर्शनेनासहमाना आहुः अजन्मान इति । हे 'अमरवर सुरश्रेष्ठ इमे लोकाः स्त्रीजना भुवनजनने त्वयि प्रति संशेरते संदेहवन्त इत्यन्वयः । भुवनानां जननमुत्प-त्तिर्य स्मात् प्रति शब्दः संशेरत इत्यत्र योज्यः छन्दसि परेपिव्य-वहिताश्चेत्यनेनामरशब्दव्यवहितेपि प्रतिशब्दस्स्वत्समीपेपि सन्देहवन्तः भवन्तीति बोधयति अनेन त्वमतिकपटीति ध्वनिः ।

कुतः संशेरत इत्यत आह यत इति यतो हेतोः अमन्दा लक्षणज्ञानेस्विचतुरा इत्यर्थः। किम्भूता अवयववन्तः अतिसुन्दरा इति यावत् पुनः अजन्मानः सुजन्म रहिता वनचर्य्यो गोप्यः अनेन सुकुलोत्पन्नया तव विहारो योग्य एव नत्वस्मदादिभिर्वनचरीभिस्सहेति लज्जयन्तीति ध्वनिः। भवे विधिर्भवविधिः स्वपत्यादिसेवा सा जगतामस्मदादीनामधिष्ठातारं त्वां किमनादृत्य त्वदादरम्परित्यज्य भवति अपि तु त्वामादृत्यैव पत्यादिपरिचर्यां कुर्वन्नपि काचिद्भिरस्त्वयं न विस्मृत इति भावः। तथा च कोऽप्यनीशः पत्यादिरहितः किं त्वदनादरं कुर्यान्न कोऽपीत्यर्थः। न ईशो यस्य स अनीशस्त्व मेवेशस्स्वामीतिभावः अस्माकं तु त्वमेव स्वामी। किम्भूतो भवविधिः परिकरः करेण दंडेन वर्जितः परिरत्र वर्जने।

## ॥ शिक्षापक्षेऽप्ययम् ॥

यत इमे दुष्टा अतो मां निन्दन्तीति चेत्तत्राह अजन्मान इति। हे अमरवर अमरा वराः श्रेष्ठा यस्मात्तथा हे मनुज इत्यर्थः। म्रियन्त इति मरा मानुषाः क्षत्रियवैश्यशूद्राः न ते श्रेष्ठा यस्मादिति वा हे ब्रह्मबन्धो इमे मत्समीपस्था लोकास्त्वां प्रति संशेरते अयमतिदुष्टकर्मरतः कान् लोकान् गमिष्यतीति संदेहवन्त इत्यन्वयः। यतस्सन्देहवन्त अतः किमजन्मानो न सुष्ठुकुलोत्पन्ना न साधवः अपि तु साधव एवेत्यर्थः। कुतः संशेरते यतो अमन्दाः पण्डिताः। किम्भता अवयववन्तः निर्मलावयवा इत्यर्थः।

ननुदुष्कर्म त्यक्त्वा वेदोक्तं कुरु इत्याह भवविधिरिति स्वर्गकामो यजेदित्यादिवेदोक्तविधिर्जगतां चतुर्दशभुवनानामधिष्ठातारमीश्वरमनादृत्य किम्भवति अपि त्वादृत्यैव वेदानां तस्यैव वाक्यत्वात् भवे विधिर्भवविधिः अनेन वेदोक्तएव व्याख्यानिति ध्वनिः । किम्भूतः भुवनजनने ईश्वरे अनीशः किञ्चिदपि उपकारं कर्तुमसमर्थः किन्तु स्वस्यैवोपकारकारकत्वात्तद्द्वारान्तःकरणशुद्धिस्ततो भक्तिद्वारा मुक्तिरिति ध्वनिः । वेति कटाक्षे कः पुमान् ईश्वरानादरं कुर्यान्न कोऽपि । पुनः परिकरः करेण वर्जितः न कोपि प्रतिबन्धकः अतो वेदोक्तमेव कुरु इति भावः । यद्वा इमे त्वत्पार्श्वस्था अपि लोकास्संशेरते किम्भूता अजन्मानः जन्मरहितास्त्वादृशा अधमाः अनेन अधमाधमस्त्वमिति सूचितः । पुनः किमवयववन्तः कुत्सितावयवयुक्ताः किम् शब्दः कुत्सितार्थे अन्यत्समानम् । यतो अजन्मानः अतो मन्दा मूर्खा इति योजनीयम् ।

## ॥ स्त्रीपक्षेप्ययम् ॥

ब्रह्मणस्सामर्थ्यातिरिक्तनिष्पादितत्वं देहस्य ध्वनयन् लावण्यमाधुर्याद्यतिशयत्वञ्च सूचयन्नाह । हे अमरवर स्त्रीजन अमर इव वरो यस्य तथा । इमे कामशास्त्रविनोदचतुरा लोकाः कवयस्त्वाम्प्रतिसंशेरते अस्याः कृष्णे अतिप्रेमातिशयमिति मुखंचन्द्र एवनेत्रे चकोरौ एवस्तनौ कनककलशावेवकरपादौ पङ्कजावेवेति तर्कवन्तो भवन्तीत्यर्थः । यतः अमन्दाः काव्यकरणरचनाविशे-

षनिपुणाः तथः अजन्मा ब्रह्मार्कि नो संशेरते अपि तु ब्रह्मापि तर्कवान्। लोका अवयववन्तः काव्यशास्त्रे ये अवयवा अलंकारादयस्तद्विषयकज्ञानवन्तः ब्रह्मा जगतां चतुर्दशभुवनानामधिष्ठाता कर्त्ता। अनेन त्रैलोक्येपिरवत्समतां कापि न यातीति ध्वनिः। किम्भूतम् त्वाम् आरम् प्रशस्तगमनकर्तारम् ऋच्छतीत्यारस्तम् ऋगतौ पन्चाद्यच् अनेन हंसगमनत्वं सूचितम् वेति पक्षान्तरे भवेविधिर्भव विधिः काव्यरसवर्णनं किं त्वामनादृत्य अनपेक्ष्य भवति अपि त्वापेक्ष्यैव त्वयैवोपमेयां अन्यां कुर्वन्तीत्यपेक्षा युक्तैव। किम्भूतो विधिः अनीशो निरंकुशः कवीनां निरंकुशत्वात् अपि च भुवनजनने एवम्भूतः कः परिकरः अस्ति यतस्त्वदपेक्षां न कुर्यात्।

**त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च। रुचीणां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥७॥**

एवं सुतर्कमुद्भाव्य सर्वशास्त्रप्रस्थानतात्पर्यम्भगवत्येव साक्षात्परम्परयावेति निरूपयन्स्तौति त्रयीति। अमर वरेति पूर्वतोऽनुपज्यते न मृयन्त इति यौगिकेनामरा ब्रह्मादयस्तेषां

मध्वेश्रेष्ठ इत्यमरवरपदेनेश्वरत्वं गम्यत एवेत्यनुपयोगादस्य सम्बोधनाभावः । हे अमरवर नृणां त्वमेकोऽद्वितीयः साक्षात् परम्परया वा गम्यः प्राप्योसि नत्वन्य इत्यन्वयः । ऋजुश्च कुटिलश्च ते च नानापथाश्च तान् जुषन्ते भजन्ते तेषाम् । दृष्टान्तमाह पयसां जलानाम्प्राप्योऽर्णवस्समुद्र इव उदन्वान-दधिस्सिन्धुस्सरस्वान्सागरोऽर्णवः इत्यमरः । ऋजुपथजुषां गङ्गादीनां साक्षा देव समुद्रः प्राप्यः कुटिलपथजुषामन्यासां तु गङ्गाप्रवेशद्वारेति परम्परया । ननु ऋजुमार्गं विहाय किं कुटिल-मार्गं सेवत इत्यत आह रुचीनामिति । प्रस्थाने तत्तद्देवताविषयकशास्त्रे प्रभिन्ने सति इदं परम् पथ्यमदः परं श्रेयस्करमिति रुचीणांम्वैचित्र्यात् विचित्रस्य भावो वैचित्र्यम् गुणवचन ब्राह्मणादिभ्य इति ष्यञ् प्रत्ययः । प्रस्थानभेदमेवाह त्रयीत्यादि अयम्भावः मीमांसकानाम्मते वेदत्रयी कर्मप्रतिपादिका कर्मकाण्ड करणात्पुण्योदयं ततस्स्वर्गादिगमनममृतपानादि फलञ्च तदु-क्तम् कर्मप्रबोधका वेदा नतु ते ब्रह्मबोधकाः इति मीमांसका प्राहुस्तन्न सत्यं कदाचन । फले मतद्वयम् कर्मकरणे सति तदानीमेवसूक्ष्मं फलमुद्भवति तदेव कालान्तरे भोगायोपजायते इत्येकः पक्षः । फलोत्पादिकया कर्मशक्त्या कालान्तरे वा फलोत्पत्तिरिति द्वितीयः पक्षः । तदुक्तं तत्रैव यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति सूक्ष्मशक्त्यात्मकं वापि फलमे-वोपजायते । वस्तुतस्तु वेदानाम्ब्रह्मबोधकत्वं तदुक्तम् ईशा-

वास्यादयो मन्त्राः न कर्मप्रतिपादकाः अखंडैकरसे शुद्धे ब्रह्मण्येव समन्विताः अयमभिप्रायःअकाम्येत्वेनकर्मकरणाच्छुभोदये नान्तःकरणशुद्धिस्ततोभक्तिस्तद्द्वारा श्रवणमननादिना ज्ञानं ततोऽनर्थनिवृत्तिरिति अथब्रह्मानन्दावाप्तिश्चेत्येवम्भूतलक्षणे मोक्षः। उपासनादिसंसिद्धंतोषितेश्वरचोदितम् अधिकारं समाप्येते प्रविशन्ति परम्पदम् इतिवाचस्पतिमिश्राः तथा सांख्यं प्रकृतिपुरुषप्रतिपादकम् तत्र प्रकृतेर्विशिष्यवर्णनम् तस्यापि मोक्षदातृत्वेन तदुपासकानां तत्स्वरूपावाप्तिस्तदधिष्ठानमीश्वर इति परंपरा। तथा योगः पातञ्जलस्तत्र विग्रहादिशुद्धया ज्ञानोत्पत्तिस्ततोमोक्षः पशुपतिमतं शिवप्रतिपादकं शास्त्रम्। वैष्णवं विष्णु विषयकं शास्त्रम् अनेनोपासना दर्शिता तत्र हरिहरयोर्मोक्षदातृत्वेन तदुपासकानां तत्प्रसादेन स्वस्वरूपावाप्तिर्मोक्ष इति साक्षादेव हरिहर-योरैक्यत्वात् वस्तुतस्तु शक्तिपूजकानामपि साक्षादेवमोक्षः पञ्चदेवतानामैक्यत्वात्। तदुक्तम्सौराश्शैवाश्च गाणेशा वैष्णवाश्शक्तिपूजकाः मामेव प्राप्नुवन्तीह वर्षापस्सागरं यथा। एकोऽहं पञ्चधाजातः क्रीड़यानामभिः किलदेवदत्तो यथा कश्चित्पुत्राद्याह्वाननामभिः इति

॥ हरि पक्षप्येवम् ॥ श्री रामचन्द्रपेक्षापि ॥

हे अमरवर ऋजुकुटिलनानापथजुषां नृणांत्वमेवैकः आश्रयणीयोऽसि। तत्रते ऋजवस्स्वजनास्तेप्रीत्या ये कुटिलाश्श-

त्रवस्ते त्वद्वशित्वेन ये नानापथजुषास्ते तत्तन्मार्गेण त्वामाश्रिता इत्यर्थः । न त्वदन्यः कोऽपि चक्रवर्तीतिध्वनिः । दृष्टान्तमाह पयसामिति त्वंसमुद्रइव, न हर्षविस्मयभयान्। ननु ऋजुमार्गं विहायकिं नाना पथं सेवत इत्यत आह रुचीनामिति । प्रभिन्ने प्रस्थाने सति इदमेव परं श्रेयस्कर अद एव परं पथ्यमिति रुचीनां वैचित्र्यात् प्रस्थानभेदमाह त्रयीति । तत्र ये वेदवादिनो वशिष्ठादयस्ते पौरोहित्येन ये कपिलमतानुसारिणस्ते यां प्रकृतिं वयमुपास्महे अयमेव तस्याधिष्ठानं वासैवायमिति ज्ञानेन, ये योग शास्त्ररतास्ते अयमेव परं तत्वमिति ज्ञानेन ।

## ॥ श्रीकृष्ण पक्षेपि ॥

काश्चित् श्रीकृष्णं शिक्षयन्त्याहुः नृणांस्त्रीजनानामस्मदादीनां-त्वमेव एको गम्य आश्रयणीयोसि । तत्र ये ऋजवस्तवाधीना-स्तेषामतिप्रीत्याश्रयणीयः ये कुटिलास्तेषां सामान्यप्रीत्या ये नानामार्गकोविदास्तेषामतिचातुर्यत्वेनच । अनेन कुटिलतां त्यक्त्वास्मान्भजस्वेति भावः । ननुता अपि कुटिलतां किं नत्यजे-युरितिचेतत्राह रुचीनामिति भिन्नरुचिर्हिलोकः । नन्वेवं तर्हि अहमपि नत्यजेमेतिचेत् पयसामर्णव इव त्वयापि समुद्रवद्भ व्य इति भावः । पयसेत्यनेन स्त्रीणां जड़ता दर्शिता अयम् स्त्रीणां स्वभाव एवेति को दोषः । क्वसति प्रस्थाने प्रभिन्न सति प्रकर्षेण स्थीयतेऽस्मिन्निति प्रस्थानस्स्वभावस्तस्मिन् किंच नन्वेवं रीतिरेव ऋजूनामृजुर्भाव्यः कुटिलानां कुटिलः

चतुराणां चतुर इति चेत्तत्राह त्रयीति एतानि शास्त्राणि लोके सन्तितेषु किमेषा रीतिरस्तीति ब्रूहीतिभावः।

॥ शिक्षापक्षेप्पयम् ॥

ऋजुकुटिलनानापथजुषां नृणां त्वमेकः गम्यः। ये त्र जव-स्तुमार्गिणस्तेषां बोद्धव्यत्वेन ये कुटिलास्तेषां त्वत्समत्वान्मित्र-त्वेन ये नानामार्गकोविदास्तेषां कौतुकदर्शनत्वेनेति।

॥ स्त्रीपक्षेप्पयम् ॥

सत्वगुणाश्रयत्वेन ऋजुगुणावच्छिन्नो विष्णुः तमोगुणा श्रयत्वेन कुटिलगुणा वच्छिन्नो रुद्रः रजोगुणाश्रयत्वेन नानापथ त्वावच्छिन्नो ब्रह्मा तान् जुषन्ते तपसा आराधयन्ति इति जुष स्तेषां नृणां तेषामेव प्रसादेन त्वमेव एका लभ्यासि। नन्वेषां मध्ये एकमेव किं न सेवेरन् तत्राह रुचीनामिति प्रस्थाने तत्त-द्विष यकशास्त्रे प्रभिन्ने सति इदमेव परं पथ्यमदः एवपरं मत्का-मापूरकं पथ्यमिति रुचीनांवैचित्र्यात्। दृष्टान्तमाह पयसामर्णव इव यथा वर्षायां नदीद्वारेणैव समुद्रो लभ्यः। ननु मुक्त्यर्थमेव किन्न तान् सेवन्ते किमस्मदर्थम् तत्राह त्रयीति। यदि सकाम-त्वेन तपोभिरीश्वरमाराधयन्ति तर्हि तत्तत्फलभोगाय.शुभोत्पत्ति रुपजायते। यदि निष्कामत्वेन तर्हि मुक्तिरित्यर्थः। त्वमेतादृशी अहो ममातिभाग्यम्॥ ७॥

महोक्षः खट्वाङ्गम्परशुरजिनम्भस्म

फणिनः कपालं चेतीयत्तव वरद तन्त्रोप करणम् । सुरास्तान्तामृद्धिं विदधति भवद्भ्रूप्रणिहितां नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥

एवं सरूपं निरूप्य प्राचीनपदस्थं स्तौति । हे वरद तस्येताहशीं दशां निशम्येदानीं दरिद्रोयं किमस्माकं दास्यतीतिशङ्का निरासाय सिंहावलोकन्यायेन वरदेति सम्बोधनम् । अनेन नेतरवद्दरिद्रत्वं किन्तु सकलेष्टदातृत्वं सर्वेश्वरत्वं परिपूर्णैश्वर्यत्वञ्च ध्वन्यते अतएव वक्ष्यति सुरास्तांतामित्यादि । एवम स्वतंत्रत्वं निरस्यन् स्वतंत्रत्वं निरूपयति । तव सकलेष्टदातुः इयत्परिमाणावच्छिन्नं तंत्रं स्वाधीनमुपकरणमस्ति । एतदुपकरणं तवाधीन नतु त्वंतस्य अनाग्रहादैश्वर्यं न दधासीति भावः उपकरणमाह महोक्ष इति उक्षतीति उक्षा उक्ष सेचने धातुः श्वन्नुक्षन्पूषन्निति कनिप्रत्ययः उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः अनड्वान्सौरभेयो गौरित्यमरः वृषो महान् महोक्षः स्यादित्यपि महाश्चासावुक्षश्च महोक्षः । खट्वाया अंगं खट्वांगम् परं शत्रुं शृणातीति परशुः अजतीति अजिनं मृगचर्म फणिनस्सर्पाः कंपतीति कपालम् । सकलेष्टदातृत्वं कथयति सुरा इति भवतो भ्रूविक्षेपमात्रेण प्रणिहितां समर्पितां तांतां

समृद्धिं सुरा विदधति धारयन्तीत्यर्थः । अनाग्रहमाह स्वस्यआत्मा स्वात्मा आनन्दरूपस्तस्मिन् आरामः क्रीडा यस्यतं विषयमृगतृष्णा नहि भ्रमयति विषया मृगतृष्णा इव असत इत्यर्थः । ब्रह्मरूपे मायाकृतविषयसामर्थ्यमयोग्यमेवेति भावः ।

## ॥ हरिपक्षे ॥

महसा तेजोत्सवेन युक्तं अक्षश्चक्रं तथा महदुद्धव उत्सव इत्यमरः । खट्वाया अंग इवेति किञ्चित्साहश्याद्गदा परशुरिति यौगिकार्थत्वेन खङ्गः अजिनं चर्म भं चन्द्रं ग्रहं|समयते स्वदीप्त्या निन्दतीति भस्म शंखः फणी शेषः गुरुत्वाद्बहुवचनम् केन जलेन पाल्यते कपालं पद्म अत्यत्लमानम् ।

## ॥ श्रीरामपक्षे ॥

हे वरद सुरा इन्द्रादयस्तां सां समृद्धिं धारयन्ति रावणवधात्स्व/स्वाधिकारं धारयन्ति त्वयि राज्ञिसति युक्तास्स्वस्वाधिकारकार्यं कुर्वन्ति त्वयि यज्ञे स्थिते सहि तत्र यत्स्वस्वाधिकारं तत्कुर्वन्ति । तत्र यज्ञे तत्रैतदुपकरणं सामग्री । उक्ष सेचने उक्षति वर्षति वाणानिति उक्षा महांश्चासा वुक्षाच महोक्षो धनुः यद्वा महसा उत्सवेन युक्तः अक्षः रथचक्रं तथा उत्सवश्चात्र शीघ्रगतया विलासः यद्वा बरलघ युक्त अक्षः चतुर्दिक्षु चक्रं आज्ञा तथा रावणवधात्सवैषां मनोत्साह इति भावः । फणतुल्यानि फलानि विद्यन्ते येषां ते फणिनो वाणाः सर्पाकाराः तपस्विवेशत्वादंगे भस्म शिवोपासकत्वाद्वा । कं शिरः पाल्यतेऽनेनेति

कपालं जटारूपम् यद्वा कं सुखं पाल्यते रक्ष्यतेऽनेनेति कपालं लक्ष्मणरूपं वानरादयो वा यद्वा कं सुखं पाल्यते प्रदीयतेऽनेनेति कपालं सीतारूपं इत्येतद्रावणवधेऽस्ति । राज्येच खट्वा अति-सुखदायिका शय्या तथा अंगं रथपत्तिगजगजा इत्येतद्राज्यां-गम् खट्वा सुखप्रदानामन्येषामप्युपलक्षणम् । यज्ञे च परशुः इन्धनं छेत्तुं कुठारः।अजिनं मृगचर्म इति अन्येषामपि वैदिकाना मुपलक्षणम् तेन मृगशृङ्गमेखलादण्डादीनां संग्रह इति बोध्यम् । किम्भूताम् भवतां भ्रूविक्षेपमात्रेण प्रणिहितां समर्पिताम् । ननुते-षामधिकाराणि लोभात्स्वयमेव गृह्णीयादिति चेन्नहीति नहि स्वात्मारामं विषयाः स्पर्शादयो मृगतृष्णा मरीचितोये प्रसिद्धा सेव भ्रमतो भ्रमयतीत्यार्थः। यस्य भ्रूविक्षेपमात्रेण ब्रह्माण्डरचना तस्येयं कियतीति भावः ।

## ॥ श्रीकृष्णपक्षेऽपि ॥

हे वरद सुराः पुनः एतेऽपिच तां तां समृद्धिं धारयन्ति । एते के महोक्षो वृषभासुरः परशुः परशुरामः भस्मासुरः फणिनः कालियादयः तत्र ये सुरास्ते रासक्रीड़ायां त्वां विहारिणं प्रेक्ष्या-नन्दरूपां समृद्धिं अनेकस्वरयुक्तवंशीशब्दश्रवणरूपां वा सुरा-स्स्वैः स्वैरंशैरवतीर्णा गोपबालकरूपास्त्वया साकं विहारेणा-नन्दरूपां समृद्धिं यद्वा सुरांशा यादवादयो भोगसमृद्धिं धारयन्ति वृषभासुरस्तेन सह संयुध्य मोक्षरूपां एवं परशुरामादयोपित ! तामित्यर्थः । इयत्तेषामेव तंत्रस्य कुटुम्बधारणरोपकरणमुप-कारः नहि तव एवं त्वं महत्परोपकारवा नतोऽस्माकमप्युपकारं

कुरुष्वेति ध्वनिः। किम्भूताम् भवतोभ्रूचालनेन दत्ताम्। नन्वहन्तु भोगेच्छाविहीनः किमर्थमेवं भवतीभिः प्रलापः क्रियते इतिचेत्त-त्राह विषयेति। विषया भक्त वनितादयो मृग्यन्तेऽयेन वनिता-दीनां मृग इव नर्तक इति वा। स्वात्मनि क्रीड़ा यस्यतं स्वेच्छया वर्तमानम् तथा खट्वांगम् खट्वायामंगानि यस्य तथा भक्त पर शय्यौ शायिनम् पुनः अजिनं अजा माया विद्यते यस्यतम् कपटिनम् पुनः कपालं कं सुखं पालयतीति कपालं सुखिनम्। त्वां किम् तृष्णा न भ्रमयति।

## ॥ शिक्षापक्षेपि ॥

सुष्ठु राति शिक्षां ददातीति यौगिकार्थत्वेन सुरा इमे लौकि-का जनाः तां तां त्वच्छिक्षारूपां समृद्धिं धारयन्ति। किम्भूताम् भवतो भ्रूविक्षेपेण प्रापिताम् भवतो भ्रूचेष्टयैव कुकर्मप्राप्तिस्तत्तो एषां जनानां तव शिक्षारूपो व्यापार इति परंपरया प्रापिताम्। कुमार्गगामिनस्तव गृहे द्रव्यादिक्षयेन इयद्वस्तुशेषो भविष्यति। महोक्षो वृद्धो वृषभा खट्वांगं खट्वामङ्गम् परशुः इंधनं छेदितुं कुठारः अजिनं मृगचर्म गृहकोणस्थितं भस्म फणिनो गृहस्थि-तास्सर्पाः कं शिरः पाल्यतेऽनेनेति कपालं रचितः केशसमूहः यद्वा कपालस्भाग्यम्। अनेन तव भाग्यादेव शुभाशुभं भविष्यति किमस्माकमिति भावश्चातस्स्वात्मानमीश्वरं भजेत्याह महीति स्वात्मनि ईश्वरे आरामः क्रीड़ा यस्यतं विषया वनितादयस्य मृगतृष्णारूपा नहि भ्रमयति यथा मरीचितोये जलबुद्धया तृषार्तो मृग इतस्ततो धावन्न स्वार्थं याति तथा भ्रमति।

## ॥ स्त्रीपक्षेप्ययम् ॥

हे वरद स्त्रीजनवरं क्रीडारूपं मनोऽभीष्टं पुरुषाणां ददातीति सम्बोधनार्थः । सुष्ठु राति द्रव्यादि ददातीति सुरा अन्नत्या भोगिनो जना देवा वा तां तां समृद्धिं त्वयासाकं हास्यादिरूपां विदधति धारयन्ति । किम्भूताम् भवतो भ्रूचालनेन समर्पिताम् ननुत्वमेव द्रव्यादि दानेन मया साकं विहारं कुर्वित्यत आह महोक्ष इत्यादि ई विस्मये ममतुगृहे इति यत्तत्तु तव कुटुम्बधारणस्य उपकरणं नहि नह्येषां मध्ये कस्यचिद्दानेन तवोपकारो भविष्यतीति भावः । ननु अन्यस्मादादाय त्वयास्मभ्यं दीयतामितिचेत् स्वात्मारामं लोके स्वेच्छया वर्तमानं विषयमृगतृष्णा भ्रमयति अहंतु न तथा ॥ ८ ॥

ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्त
विषये समस्तेप्येतस्मिन् पुरमथन तैर्विस्मित इव स्तुवन् जिह्रेमि त्वां न खलु
ननु धृष्टा मुखरता ॥ ९ ॥

एवं सगुणं निर्गुणं च निरूप्य पक्षत्रयमाविष्कुर्वन्स्तौति ध्रुवमिति । हे पुरमथन ध्रुवमित्यादिभिः पक्षत्रयैः स्तुतिप्रकारैस्त्वां

[स्तुवन् अहं न जिह्रेमि न लज्जाम्प्राप्नोमि । क इव विस्मित इव तव स्तुत्या कृपापांगव्रजाज्जातानेक युक्तिसामग्रीरूप चमत्कार इव । पत्तत्रयमाह कश्चित्कपिलादिमतानुसारी इदम् विश्वं ध्रुवं सदेव गदति । नहि सिकताभ्यस्तैलवदसत उत्पत्ति स्सता वा विनाशस्सम्भवति किन्तु कारणे सूक्ष्मरूपेण स्थित-स्याविर्भाव एवोत्पत्तिः तस्मिन्नेव सूक्ष्मरूपेण तिरोभावो विनाशः असत एवोत्पत्तौ तु सर्वेभ्यस्सर्वमुत्पद्येत् उक्तश्च तिरोभावाभ्यु पगमे भावानां सैव नास्तिता लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते । वटबीजे सुसूक्ष्मेपि महावटतरूर्यथा सर्वदास्तेऽन्य-थाबृत्तः कुत आयाति तद्वद इति । यथा कुलालादिव्यापारात्पूर्वं मृदादिषु घटादेः सत्वेपि सूक्ष्मत्वादेनोपलम्भाभावः एवं च कारणे कार्यस्यापीति इत्येकः पक्षः । तथापरो बुद्धमतानुसारी इदं विश्वं अध्रुवं क्षणिकं गदति कथयति । नह्यसतः स्थिरत्वं सतोऽस्थिरत्वञ्च सम्भवति क्रियाकारित्वं हि सत्वं तच्च समर्थ-स्याक्षेपायोगेन न विलम्बेनोपपद्यत इत्येकस्मिन्नेवक्षणे सर्वक्रिया समाप्तेरुत्तरक्षणे लयमेवेति द्वितीयः पक्षः । तथापरस्तार्किकः समस्तेप्येतस्मिन् जगति ध्रौव्याध्रौव्ये नित्यनित्यत्वे गदति। ध्रुवं नित्यमध्रुवंमनित्यं तस्य भाव इत्यर्थे गुणवचनात् ष्यञ् प्रत्ययः । किंभूते व्यस्तविषये व्यस्तं भिन्नं विषयो ययोस्ते इति तथा । एवञ्च पृथिव्यादयो द्विधानित्या अनित्याश्च परमाणुरूपा नित्याः कार्यरूपास्त्वनित्या इति भिन्नविषयत्वेन नित्या नित्यत्वं दर्शितम् एवं परमाणुरूपस्य कारणस्य नित्यत्वं तत्समूहेन कृतस्य

कार्यस्यानित्यत्वमिति विवेकः । तत्समूहकृतकार्यस्य तस्मिन्नेव कारणे लयादिति तृतीयः पक्षः । कुतो न जिह्रेमि खलु प्रसिद्धो मुखरता धृष्टा निर्लज्जा धृष्टताया अद्वितीय सतो ब्रह्मणः स्तुतौ लज्जा हारिकत्वेन निर्लज्जा स्तुतिप्रवृत्तिर्युक्तैव । वस्तुतस्तु यतो वाचो निवर्तन्ते इत्यादिश्रुतेदपि सन्देहबलेन तस्य सजातीय विजातीय शून्यस्य सन्मात्रस्य ब्रह्मणः अस्मदादी नाऽबुद्ध्याद्य गोचरत्वेन स्तुतिप्रवृत्तेः स्पर्शोपि नास्ति । तथाच गुणानामनन्यत्वात्सगुणब्रह्मण एव स्तुतिप्रवृत्तौमुखरता लज्जाहारिकेति ।

## ॥ हरिपक्षेप्येवम् ॥ रामचन्द्र पक्षेप्ययम् ॥

हे पुरमथन रावणादिदुष्टघातक राम अहं त्वां स्तुवननजिह्रेमि तव स्तुतौ पारं गन्तुं ब्रह्मादीनामपि गणनाभावादहं कियानिति न लज्जाम्प्राप्नोमि क इव विस्मित इव कृपापांगव्रजाज्जातचमत्कारो वाल्मीकादिरिव वाल्मीकादिस्तुतिप्रवृत्तिद्वाराहमपि तव स्तुतौ प्रवृत्तोस्मि । कुतोन जिह्रेमितैस्तव मनोहरैश्चरित्रश्रवणादिभिरुद्भूता या मुखरता सैव धृष्टा लज्जाहारिकेत्यर्थः । तथा कश्चित्सूक्ष्मज्ञः पुरुष इदं सर्वं तव चरितं ध्रुवं नित्यं कथयति नहि सत्यस्य चरितमस्मदादीनामिवानित्यम् । तदुक्तंस्कन्दपुराणे नित्यास्सर्वे विहाराद्या आप्तकामस्ततः स्वयम् । रहस्यं त्विदमेतस्य प्रकृतेः परमुच्यते । प्रकृत्या खेलतस्तस्य लीलान्यैरभिभूयते। सर्गस्थित्यप्पपाचात्र रजस्सत्वतमोगुणैः॥ तथा अपरः स्थूलदर्शी सर्वमिदं तव चरितं समस्तेपि एतस्मिन्

व्यष्टिरूपे जगति सति अध्रुवं व्यावहारिकं गदति। नहि प्रयोज-नमनुद्दिश्य लीलां करोति। तदुक्तम् लीलैवं द्विविधा तस्य वास्त-वीव्यावहारिकीवास्तवीतुस्वयम् वेद्या जीवानां व्यवहारिकी। आद्याम्विना द्वितीया न द्वितीया नाद्यगा कचित्। परःसन्दिग्ध जनः ध्रौव्याध्रौव्ये तव चरिते गदति ईश्वरत्व ज्ञाने नित्यत्वमनी-श्वरत्वज्ञाने अनित्यत्वम्। किम्भूते व्यस्तविषये।

## ॥ श्रीकृष्णपक्षेपि ॥

हे पुरमथन कामोत्पादकत्वेन देहसंतापन अहं त्वां स्तुव-न्सन्तव कपटप्रशंसां कुर्वंश्च जिह्रेमि किन्तु जिह्रेमि एवेति। काकुः। नु इति वितर्के क इव विस्मित इव यथा। कश्चिद्विस्मय-यम्प्राप्तः किञ्चिदपि वक्तुं नोत्सहते कथयन् विलज्जत इव। नन्वेवं किमर्थं स्तौषीतिचेत्तत्राह" मुखरितेति। तैस्तव तेंता-रूपैश्चरितैरुद्भूता या मुखरता वाचालताधृष्टा लज्जाहारिके-त्यर्थः। प्रथमं प्रशंसां करोमि पश्चाल्लज्जाम्प्राप्नोमि। यद्वा त्वां स्तुवन्नहं न जिह्रेमि अतो धृष्टा निर्लज्जा। तैः कपटप्रेम-हास्य रसादिभिर्यतो मुखरता वाचालता। कपटिनस्तवप्रशंसा अयोग्यैवेत्यहं जानाम्यपि परन्तु त्वया कपटिना हृतचित्ता प्रशंसां करोमि। किञ्च कश्चिदविश्वस्तः स्त्रीजन इदं तव कपटरूपं सकलं समस्ते प्येतस्मिन् जगति स्त्रीजने ध्रुवं नित्यं गदति। अपरो विश्वस्तः अध्रुवम्। परो विश्वासे संदिग्धः कपटरूपे ध्रौव्याध्रौव्ये कथयति कदाचित्कपटं करोति कदा-चिन्नेति भावः किम्भूते व्यस्तविषये॥

## ॥ शिक्षापक्षेऽपयम् ॥

हे पुरमथन अर्थस्तु पूर्ववत् । कंचिदपमार्गिणं शिक्षयन्प्रशंसां कुर्वतः पश्चात्क्रुद्धस्य वाक्यमिदम् । अहं त्वां स्तुवन्तव प्रशंसां कुर्वन् न जिह्रेमि अपि तु जिह्रेमि । नु वितर्के विस्मित इव । धृष्टा मुखरतैव प्रशंसायाः प्रारंभकर्त्री । किञ्च कश्चित्पुरुषः तव कर्म विशेषज्ञः सर्वमिदं तव निन्द्यं कर्म ध्रुवं नित्यं क्षणेक्षणेवं करोषीति गदति । अपरः कर्मांज्ञाता अध्रुवं कदाचित्करोतीति गदति । परस्सन्दिग्धः इदं सकलं ध्रौव्या ध्रौव्ये कथयति ।

## ॥ स्त्रीपक्षेऽपयम् ॥

श्रीकृष्णवाक्यम् । हे पुरमथन त्वां वर्णयन् अहं न जिह्रेमि असामर्थ्यत्वेन तव वर्णने अहं कियान् इति लज्जां न प्राप्नोमि । विस्मित इव काव्यशास्त्रपरिपक्वबुद्धिरिवा ननु कुतो न लज्जसे इति चेदाह तैस्तवांगातिपेशलत्वादिभिरुद्भूता या मुखरता वाचालता सैव धृष्टा वर्णने प्रयोजिका । किञ्च नन्वित्युत्प्रेक्षायाम् । सर्वमिदं तवांगातिपेशलत्वादि कश्चित्काव्यशास्त्रपरिपक्वबुद्धिर्ध्रुवं नित्यं उत्प्रेक्षते । पञ्चभूतातिरिक्तसामग्रीनिष्पादितमगस्येत्यभिप्रायः । अपरो नित्यानित्यविवेकवान् सकलमिदमंगमध्रुवमनित्यं गदति । अस्मदाद्यनुग्रहेण ब्रह्मणा रचितं पाञ्चभौतिकमेव । परः उभय पाक्षिकः कविः ध्रौव्या ध्रौव्य नित्या नित्ये गदति किम्भूते व्यस्तविषये व्यस्तं भिन्नं विषयो ययोस्ते इत्यर्थः ॥४॥

तवैश्वर्यं यत्नाद्यदुपरि विरिंच्यो हरिरधः परिच्छेतुं यातावनलमनलस्कन्धवपुषः। ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिशयत् स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥१०॥

इदानीमति प्रतापवन्तौ सर्वेश्वरौ हरिविरंच्यावपि तवान्तं न ययतुरिति माहात्म्यातिशयं प्रकटयन् अन्येषां किमु वक्तव्यमितिध्वनयन्स्तौति। हे गिरिश गिरिश इत्यस्य शब्दस्य स्थूलरूपस्य सूचकत्वेन तत्परिच्छेदकत्वावच्छिन्नत्वेपि तावन्तम् न ययतुरिति महत्कौतुकम्। तवानुवृत्तिस्सेवा किं न फलति न फलं ददाति अपि तु ददात्येव। तद्देवान्यव्यवसतिरेकाभ्यां दर्शयति। ( अनिल स्कंधेति ) अनलस्कंधवपुषस्तवैश्वर्यं विवदमानयो हरि विरंच्यो र्मध्ये उत्थितं तेजोरूपं परिच्छेत्तुमाद्यन्तौ परिमातुं विरंचिर्ब्रह्मा उपरि हरिर्विष्णुरधो यत्नाद्यावत्सामर्थ्यं यातौ नालं न समर्थौ। अनलोऽग्निस्तस्यस्कंधस्समुदायस्स वपुर्यस्य स्कंधस्समुदयेपि च इत्यमरः तदुक्तं शिव पुराणे ब्रह्मोवाच एवं वर्षसहस्रं तु चरन् विष्णुरधोगतः नापश्यदल्पमप्यस्य मूलं लिङ्गस्य शङ्करः। तावत्कालं गतोरूर्ध्वमहमप्यरिसूदन सत्वरं सर्वयत्नेन तस्यान्तं ज्ञातुमिच्छया। श्रांतो

न दृष्टा तस्यान्तमहं कालादधोगतः तथैव भगवान् विष्णुः श्रांत स्त्रस्तविलोचनः । समागतो मया सार्द्धं प्रणिपत्य भवं मुहुः मायया मोहितशम्भो स्तस्थौ संविग्न मानसः । ततस्त-स्माद्धेतोस्स्वयं शिवस्ताभ्यां तस्थे तदर्थमाविर्बभूव । किम्भू-ताभ्याम् भक्तिश्रद्धाभरगुरुगृणद्भ्याम् भक्तिः प्रेमलक्षणा गुरुवे-दान्तवाक्येषु विश्वासः श्रद्धा तयोर्भरो भारस्तेन गुरु यथा तथा गृणद्भ्याम् । तयोरपि प्रसादं बिना न त्वं ज्ञेय इति भावः अतः सर्वेषां त्वं भक्त्यैव लभ्य इति । भक्तिरेव ज्यायसीति सिद्धान्तः । अतो ममापि भक्त्यैव स्तुवतः कदाचित्त्वल्लाभो भविष्यत्येवेति ध्वनिः ।

## ॥ हरिपक्षे ॥

गिरौ त्रिकूटाचले शेते इति गिरिश । अस्मिन् पक्षे हरिः शेषः । विधिहरिभ्यांत्वं भक्त्यैव साक्षात्कृत इत्यर्थः । अन्यत्स मानम् ॥

## श्रीरामपक्षे तु ।

तवैश्वर्यं परिच्छेत्तुं ब्रह्माशेषनागौ न समर्थौ यद्वा तेजोवतो विष्णुरूपस्य तवैश्वर्यं चेष्टां श्रति विचारेण परिच्छेत्तु किम् करिष्यतीति ज्ञातुं उपरि विरंचिरधो हरिरिन्द्रः यातो विष्णुस न्निधौ प्राप्तौ नालं न समर्थौ बभूवतुः ततः गुरुगृणद्भ्यां रावण प्राप्तं दुःखं ज्ञापयद्भ्याम् ताभ्यां ब्रह्मेन्द्रार्थं अयमिदं करिष्य-तीति ज्ञापनार्थं स्वयं अवततार ।

## ॥ श्रीकृष्णपक्षेऽर्थम् ॥

कृष्णेन सार्द्धं रन्तुमनेकधा प्रलापं कुर्वतीनां मध्ये काचित्स्वमनोरथं प्रकटयन् कथयति । हे गिरिश कृष्ण गिरौ गोवर्द्धने शेते इति तवैश्वर्यं ज्ञातुं उपरिस्थितो ब्रह्मा तदधःस्थितो हरिरिन्द्रो यत्नादतिवेगेन यातौ व्रजमायतौ न समर्थौ बभूवतुः । ततः ब्रह्मेन्द्रयोरयमीश्वरावतारः किम्वाऽनेतिविस्मयाहंकारमदनिवृत्यर्थं स्वयं भवान् तस्थे गोवत्साभिरूपेण इन्द्रवर्षणे गोवर्द्धनोद्धारणेन व्रजरक्षया च ईश्वरत्वं प्रकटयामास । किम्भूताभ्याम् अभक्तिश्रद्धाभरगुरु गृणद्भ्याम् । अयमीश्वरावतारः किम्वा नेति गोपालेन मम यज्ञभंगः कृत इति च अनेकधा कथयद्भ्याम् । यद्वा स्वयं तस्थे ब्रह्मणोपरि विस्तीर्णां स्वां मायां हृत्वा व्रजरक्षणेनेन्द्रस्य मदं च हृत्वा पश्चात् गोपालरूपं प्रकटयामास ।

## ॥ शिक्षापक्षेऽपि ॥

पितृभ्यां कृतं तव सेवनं कुफल मिति प्रकटयन् 'शिक्षयति गिरिशेति गिरौशेते इति पर्वतीयगिरिगामित्वाद्वा यस्मात्कारणादनलस्कन्धवपुषः अनलोऽग्निस्तस्य स्कंधस्समूह इव वपुस्तस्य अतिक्रोधवत इत्यर्थः तवैश्वर्यं निंद्यकर्म परिमातुमुपरिस्थितो विरंचिर्ब्रह्मा अधःस्थितो हरिः शेषनागः यातौ इमं लोकमायातौ सतौ न समर्थौ तस्मात्ताभ्यां पितृभ्यां कृता तवानुवृत्तिस्सेवा अभक्तिश्रद्धाभारेण गुरु यथा किम्भूताभ्याम् यत्नाद्गृणद्भ्याम् अनेकधा शिक्षायद्भ्याम् ।

॥ स्त्रीपक्षेऽप्ययम् ॥

श्रीकृष्णः राधां प्रशंसन् स्वमनो गतं प्रकटयति । गिरिगा-मित्रादुत्पन्नत्वाद्वा गिरिशेति सम्बोधनम् । हे स्त्रीजन तव ऐश्वर्यं प्रेमलावण्याद्यतिशयं परिच्छेत्तुमीदृगिति कार्त्स्न्येन वर्णितं विधिशेषौ न समर्थौ । ततस्ताभ्यां तवानुवृत्तिस्सेवनं स्वयं तस्थे फलरूपेणाविर्बभूव । तव सेवनं फलत्येवं । तयो-रपि तव सेवयैव वर्णनशक्तिरतोऽस्माकमपि तव सेवनेन मनोरथं स्यात् ॥१०॥

**अयत्नादासाद्य त्रिभुवनमवैरव्यतिकरं दशास्यो यद्बाहूनभृत रणकण्डूपरवशान् । शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥११॥**

रावणस्य शिवानुग्रहेणे शातुलैश्वर्यप्राप्तिरिति दर्शयन्स्तौति अयत्नेति । स्वत्कोपप्रसादाभ्यामेव विनाशत्वं महदैश्वर्यञ्च जनः आप्नोतीति त्रिपुरहरेत्यस्याभिप्रायः । शिरांस्येव पद्मानि कमलानि तेषां श्रेणी पंक्तिस्तया रचितश्चरणाम्भोरुहयोर्बलिर्यस्यां तस्याः स्थिरायाः निश्चलायास्तद्भक्तेरिदं विस्फूर्जितम् चमत्कारः रावणस्येति शेषः । यद्दशास्यः रावणः रणाय कण्डू

खर्जून्तस्या परवशान् अधीनान् बाहून् अभूतद्धार। किं कृत्वा अवै रव्यतिकरं त्रिभुवनं अयत्नात्युद्धमिवनैव आसाद्य। त्रयाणां भुवनानां समाहार इति तथा। न विद्यते वैरस्य व्यतिकरं कारणं यत्तथा। इन्द्रादयो रावणयुद्धोद्यमं ज्ञात्वा स्वयमेव लोकंत्यक्त्वा गताइति भावः।

## ॥ हरिपक्षे ॥

त्रिभिस्सत्त्वादिभिः पुरं शरीरमिति तथा तं हरति नाशयति इतिहे त्रिपुरहर मोक्षप्रद। यद्वा त्रयाणां सत्त्वादिगुणानां पुरं समूहो यत्रतं देहं भक्तानुग्रहार्थं हरति स्वीकरोति। अनेन चतुर्विधमोक्षप्रदातृत्वं सूचितम्। यद्वा त्रिपुरास्त्रयो लोकास्तान् स्वस्मिन् लीनान् करोति। यद्वा देवासुरमनुष्यान् स्वी करोति नाशयति आपयति च तथा। यद्वा त्रिभिर्वेदैः पुरं शरीरं यस्य सत्रिपुरस्सूर्यः त्रयीरूप इत्यर्थः। तदुक्तम् त्रयीमयाय त्रिगुणात्मधारिणे विरंचिनारायणशङ्करात्मने इतितं हरति प्रापयति लोकयात्रार्थ मिति तथा। पूर्वजन्मनि स्थिरायाः स्वभक्तेरिदं रावणस्य विस्फूर्जितम्। अन्यत्समानम्।

## ॥ श्रीरामपक्षे ॥

त्रिपुरहरेत्यस्य पूर्ववदर्थः। यद्वा त्रयाणां पुराणां लक्ष्मणभरतशत्रुघ्नदेहानां समाहार इति त्रिपुरं तद्धरति स्वीकरोति भ्रातृत्वेन। यद्वा त्रिपुरा ऋक्षवानरमनुष्यास्तान् स्वीकरोति

रावणयुद्धार्थम् । अवैरव्यतिकरं अभागो वासुदेवस्तस्मिन् वैरस्य व्यतिकरः कारणं तथा । शेषं पूर्ववत् ।

## ॥ श्रीकृष्णपक्षे ॥

गोपीवाक्यम् । हे त्रिपुरहर त्रिशूले पुरं त्रिपुरं काशीपुरं तन्नाशयति सुदर्शनेन तथा । यद्वा त्रिषु लोकेषु विख्यातं पुरं द्वारकापुरं तत्स्वीकरोति । यद्वा त्रिषु अर्थधर्मकामेषु पुरं येषां तान् यादवान् प्रापयति द्वारकाम् । दशास्य इत्यपि सम्बोधनम् दशसुदिक्षु आस्यं मुखं यस्य सः; सर्वतोमुखेत्यर्थः । उ शब्दो वितर्के । सम्बोधनद्वयेन योगमायेशत्वं सर्वव्यापकत्वञ्च सूचयति । शिरः पद्मश्रेणीरचितचरणाम्भोरुहबलेः बाणासुरस्य स्थिरायास्त्वद्भक्तेरिदं विस्फूर्जितम् यत् सः रणकण्डूपरवशान् बाहून् दधार । त्वया युद्धे छिन्नान्यबाहुरवशेषितान् चतुरो बाहून् दधारेत्यर्थः । तदुक्तं भागवते दर्पोपशमनायास्य प्रवृक्णा बाहवो मया सूदितञ्च बलं भूरि यच्च भारायितम्भुवः । चत्वारोऽपि भुजाशिशष्टा भविष्यत्यजरामरः पार्षदमुख्यो भगवतो न कुतश्चिद्भयोऽसुरः इति । किं कृत्वा त्रिभुवनं त्रिभुवनरूपं त्वा मण्डलात्तस्यादि वनैव सम्प्राप्य । किम्भूतम् न विद्यते वैरस्य व्यतिकरः कारणम् यत्र तम् । प्रथमं द्विषन्त्वया सह संयुध्य पश्चात्त्वयि जातभक्तिस्सिद्धो बभूव । अतोऽस्माकमपि भक्तानां मनोरथं कुर्वीत भावः ।

## ॥ शिक्षापक्षेऽप्ययम् ॥

हे त्रिपुरहर त्रयाणां सत्वादीनां पुरं शरीरं तत्स्वकीयत्वेन स्वीकरोतितथा हे देहाभिमानिन् इदं शिरः पद्मश्रेणीरचितचरणाम्भः तव स्थिरायास्तु । शिरांसि पद्मानि तेषांश्रेणी पंक्तिस्तया रचितो भूषितो यः पद्माक्षो विष्णु स्तस्य यौ चरणौ तयोरम्भश्चरणोदकमिदं त्वन्मुक्तयेऽस्तु । यद्वा शिरांसि श्रेष्ठानि पद्मानि तेषां पंक्त्यारचितः गले कमलमालया विभूषित । इत्यर्थः । किम्भूतमम्भः विस्फूर्जितम् पापक्षालनत्वेन निर्मलम् यतः सकाशात् दशास्यो रावणोऽङ्कः रणाकराडम्बरवशान् बाहुन् अभृत । अतति व्याप्नोतीत्यत् अत् सातत्यगमने क्विप् । अच्चासौ भक्तिश्चतस्या हेतोः । किम्भूताया भक्तेः अरुहबलेः अकारो वासुदेवः रोहतीति रुहः सचासौ रुहश्च तथा सर्व-बीज इत्यर्थः तस्य बलिरुपचारो यस्यां तस्याः । रुहबीजजन्म-प्रादुर्भावे इगुपधज्ञाप्री किरः कः इति क प्रत्ययः । यद्वा त्रिपुरेति सम्बोधनम् हरेति क्रियापदम् अत्रपक्षे त्रिभिः सत्वादिभिः पुरं शरीरं यस्येति विग्रहः । स्थिरायाः इत्येकं पदम् भक्तेः इत्यस्य विशेषणम् । तु शब्दः पाद पूरणार्थः । चरणोदकं हर मोक्षपर्यन्तं स्वीकुरु इत्यर्थः ॥

## ॥ स्त्रीपक्षे ॥

हे त्रिपुरहर त्रिपुरास्त्रयो लोकास्तान् स्ववशं प्रापयतीति । स्थिरायास्तवभक्तेरिदं विस्फूर्जितमित्यन्वयः । अन्यदस्मिन् पक्ष

तव भक्तिस्तस्या इत्यर्थः। त्वच्छब्दान्ताचो तत्कुर्यात्ऋग्वेदे तरोरुत्वङ्घ्रन्ति सूत उत त्वदिति वेदभाष्येपि त्वदिति सर्व-नामसु पठितोऽनुदात्तोयमन्यपर्याय इति। त्वदधरमधुरम-धूनि पिबन्तमिति जयदेवः। किं तदाह यत् शिरः श्रेष्ठा पद्मा पद्मरागादयस्तेषां श्रेणी पंक्तिः तैर्निर्मितहारादिना शोभित-स्त्वमित्यर्थः। किञ्च यद्दशास्यो बाहुनासाद्य त्रिभुवनमभूत नदपि अन्यभक्तेर्विस्फूर्जितम्। किम्भूताया भक्तेः अन्येनैव अलकादिना रचितौ चरणाम्भोरुहौ तयोरुपहारो यस्यां तस्या इतिहास्यवचनमित्यवसेयम्॥११॥

अमुष्य त्वत्सेवासमधिगतसारं भुज-वनं, बलात्कैलासेपि, त्वदधिवसतौ विक्र-मयतः। अलभ्यापातालेप्यलसचलितां-गुष्ठशिरसि, प्रतिष्ठा त्वय्यासीद्ध्रुवमुप-चितो मुह्यति खलः॥१२॥

इदानीं तस्य गर्वव्याङ्गत्प्रतिकूलतया ऐश्वर्यभ्रष्टत्वं दुष्टत्वञ्चोद्भावयन्स्तौति अमुष्येति। हे त्रिपुरहर अमुष्य राव-णस्य प्रतिष्ठा स्थितिः पातालेपि अलभ्या न लब्धुं योग्या आसीदित्यन्वयः। ननु अस्मदनुग्रहवतः कथं न स्थितिरिति

चेत्तत्राह। अलसं यथा स्यात्तथा चलितं कंपितं अंगुष्ठस्य शिरोऽग्रं येन तस्मिन्त्वयि सति। स्वामिनस्प्रतिपक्षवतोऽधः पातो युक्त एव। अनेन तस्य गर्ववतो भगवदननुग्रहत्वं सूचितम्। ननु कथं भक्तिमतस्तस्यास्मदननुग्रहः। त्वत्सेवया समधिगतः सारो बलंयेन तत् भुजवनं विंशति बाहून् बलाधिक्यात् त्वदधिवसतौ कैलासे विक्रमयतः मद्गृहादति दुर्गोऽयमितीमं मुत्पाट्य लङ्कांप्रापयिष्यामीति भुजचेष्टां कुर्वतः। भुवम् निश्चलम् खलसम्भृद्धसन् मुह्यति मोहम्प्राप्नोति। त्वयैव दत्तवरस्तवैवापकारं कृतवानिति महामूर्खताऽस्य॥

## ॥ हरिपक्षे॥

अमुष्य रावणस्य प्रतिष्ठा स्थितिर्मानं वा पातालेप्यलभ्या सीत् क सति अलसमपराक्रमं यथा स्यात्तथा चलितं चेष्टितमंगुष्ठस्य शिरोऽग्रं येन तस्मिंस्त्वयि सति। वामनरूपेण त्वयांगुष्ठाग्रेणैव दशयोजनं चालितः। अपि शब्देनास्मिन्नपि लोके कियद्वारं सहस्रार्जुनादिभिरयमपमानित इति सूचितम्। किम्भूतस्य तस्य त्वदधिवसतौ कैलासे कं ब्रह्माण्डमेलति प्रेरयतीति कैलो विष्णुस्तस्मै आस्ते तपस्येति कैलास ऋषिसमूहस्तस्मिन् भुजवनं विक्रमयतः। भुजबलेनैव ऋषिसमूहादपि दंडमाददत इत्यर्थः। तस्य गर्ववतो महदतिक्रमणेनैवाऽधःपातोऽभूदिति भावः। किम्भूतस्त्वत्सेवया पूर्वजन्म कृतया समधिगतः प्राप्तः सारो बलं येनतम्। अतिक्रमणे हेतुमाह खलसम्भृद्धसन् मुह्यति।

## ॥ श्रीरामचन्द्रपक्षे ॥

अमुष्य रावणस्य प्रतिष्ठा लयस्त्वय्यासीदिति महद्भाग्यम् किम्भूते त्वयि अलसचलितं रावणयुद्धे बाणक्षेपणे चेष्टितं अंगुष्ठस्य शिरोऽग्रं येन अंगुष्ठश्च शिरश्चेति वा तस्मिन् पुनः पाताले दुष्टानां पाके मरणे अलतीति तथा । किम्भूता सा त्वद्धिवसतौ त्रैलोक्येऽपि अलभ्या दुष्टैर्लब्धुं योग्या । किम्भूतस्य कैलासे केलिरेव कैलस्तेनास्ते इति कैलासस्तस्मै क्रीडा-घतनाय तुभ्यं भुजवनं बलाद्विक्रमयतः त्वया सह युद्धे भुज-चेष्टां कुर्वतः । किम्भूतम् त्वत्सेवासम्प्राप्तबलम् । यद्वा केलिरेव कैल आस्ते इत्यासः पचाद्यच् कैले क्रीडाया मासः स्थित इति कैलासस्तस्मिन् । अत्र पक्षे पाताले सप्तम्यन्तम् अत्र कैलासे त्वयि पातालेऽपि भुजवनं बलाद्विक्रमयतः । ध्रुवमिति निश्चितो-ऽयमर्थः समृद्धः खलो मुह्यति स्वयमेव नश्यतीत्यर्थः । दुष्ट-नाशाय तवावतार इति भावः ॥

## ॥ श्रीकृष्णपक्षेऽपि ॥

हे कृष्ण अमुष्य बाणासुरस्य प्रतिष्ठा अभया स्थितिः त्वयि आसीत् त्वच्चरणसमीपं प्राप्येत्यर्थः आधारे सप्तमी । किम्भूते अलसं यथा स्यात्तथा बाणयुद्धे बाणक्षेपणे चेष्टितमंगुष्ठस्य शिरोऽग्रं येन अंगुष्ठश्च शिरश्चेति वा तस्मिन् । किम्भूता सा पाताले अलभ्या अपिना स्वर्गोऽपि गृह्यते । किम्भूतस्य त्वदधि-वसतौ अस्मिन् लोके कैलासेऽपि भुजवनं चतुर्बाहून् बलाद्

त्वत्सेवबलाद्विक्रमयतः नमस्कारादिना भुजचेष्टां कुर्वतः । किम्भूतम् त्वत्सेवया समधिगतः पूर्वस्मादपि अधिकः सारोबलं यस्मिन्तम् । यद्वा त्वदधिवसतौ स्वर्गे पातालेपि कैलासेपि भुजबलं सहस्रबाहून् बलाद्विक्रमयतः । स्वर्गपातालयोर्युद्धेन कैलासे सहस्रबाहुलाघवेन शिवाग्रे भुजचेष्टां कुर्वत इत्यर्थः । किम्पुनरिह लोके । किम्भूतम् त्वत्तोऽन्यस्य देवस्य शिवस्य सेवया समधिगतं बलं यस्मिन् तम् न तु स्वतः । एवं वयमपि त्वत्प्रसादाः ।

## ॥ शिक्षापक्षे ॥

महच्छिन्नतया सलज्जमंगुष्ठाग्रेण भुवं लिखंतं प्रत्याह । अमुष्य तव पितुस्त्वदधिवसतौ गृहेपि स्थपि पुत्रे सति प्रतिष्ठा स्थिराभीद् । किम्भूते अलसं यथा स्यात्तथा चलितं चंचलमंगुष्ठस्य शिरोऽग्रं येन तस्मिन् । किम्भूता सा पातालेपि अलभ्या देवप्रसादं बिना न लब्धुं योग्या । किम्भूतस्य कैलासं क्रीडावतीर्णाय गोपालाय भुजबलं हस्तोदकमाचमनार्थं ददतः हस्तोदकमिति पाद्यादीनामुपलक्षणम् । अनेन सन्तान गोपालमंत्रप्रसादेनैव त्वं लब्ध इति ध्वन्यते । अतएव त्वयिकष्टतरप्राप्ते सति नास्य मोहनिरासो भवतीति भावः । अतः सुमार्गपदे मनो देहीत्यभिप्रायः । किम्भूतम् त्वत्सेवया त्वदर्थं गोपालसेवया समधिगतं साररूपं येन तम् । अन्यत् समानम् ।

## ॥ स्त्रीपक्षे ॥

राधामन्येन सेव्यमानां दृष्ट्वा हास्यन् कथयति । त्वदधिव-

सत्ताववस्मिन्पुरे अमुष्य त्वत्समो प्रश्रयस्य जनस्य प्रतिष्ठा त्वयि आसीत् ।। त्वत्प्रेमलावण्यादिमाहितो नान्यत्र गच्छति । किम्भूते अचलचालितांगुष्ठशिरसि अंगुष्ठ इति अंगुलीनामुपलक्षणम् शिर इति गात्रस्य पाताले नागलोके पि अलभ्या ननु त्वादृशी काचिन्नाग लोकेपि प्रेमसौन्दर्यवती अस्तीति । अतो महद्भाग्यमस्येति भावः । पुनस्त्वत्सेवा तत्र सेवा यस्यां सा । किम्भूतस्य केलिरेव कैलस्तस्मै घ्यास्ते इति कैलासस्तस्मै जनक्रीड़ार्थं ब्रह्मणा निर्मिताय तुभ्यं भुजवनं पानाद्यर्थं हस्तोदक । ददतः । प्राप्तः सारः शैत्यपावनादि येन तत् । ध्रुवम् समृद्धः खलो शास्त्रविचार विवेकशून्योः मुह्यति योषिद्वेषादिना वशम्प्राप्तोतीत्यर्थः वयं तु न तथा भविष्यामः ॥१२॥

यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सतीं, मधश्चक्रे बाणः परिजनविधेयत्रिभुवनः । न तच्चित्रं तस्मिन् वरिवसितरि त्वच्चरणयो, र्न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥१३॥

इदानीमवनतस्य बाणासुरस्येन्द्रादप्यधिकां समुन्नतिम्प्रदर्शयन्स्तौति । हे वरदपरम वरदेषु परम उत्कृष्ट इति सम्बोधनार्थः । महदैश्वर्यदातृत्वे इदमेव सम्बोधनं योग्यम् । बाणो

बाणासुरः परिजनैर्भृत्यैर्विधेयं शिष्यं त्रिभुवनं यस्य सः । यत्सुत्राम्ण इन्द्रस्य सतीमुच्चैर्मृद्धिस्महासम्पत्तिमधश्चक्रे स्वस्वकृतया तुच्छां चकार तन्न चित्रम् । सुत्रामा गोत्र भिद्वज्री वासवो वृत्रहा वृष इत्यमरः । कस्मिन् त्वच्चरण योस्तस्मिन् वरिवसतरि नमस्कर्तरि सति । त्वयि नमस्कृतिर्महा सम्पत्तिं ददात्येव । तद्राहकस्य जनस्य शिरसः त्वयि अवनतिर्नमस्कृति रुन्नत्यै न भवति । एवं जानन्नहमपि प्रवृत्तोऽस्मीति भावः ।

## ॥ हरिपक्षे ॥

सुत्राम्ण इन्द्रस्य बाणशर अघोपि सतीं यद्‌द्धिं उच्चैस्त्रैलोक्यव्यापिनीं चक्रे तन्न चित्रम् । यद्वा अं हरिं वान्ति गच्छन्त्यनेनेति अवं हरिनाम तेन अनति जीवतीति अवाणः अनप्राणनं धातुः उणादिनि[illegible]त्वान्निपात्यते । अवाणः सनकादिः सुत्राम्ण इन्द्रतुल्यस्य तव यद्‌द्धिमुच्चैर्महासम्पत्ति सतीमनघांमधश्चक्रे मर्त्यलोकं प्रापयामास तन्न चित्रम् । सनकादिशापाद्भ्रष्टौ तव भक्तौ जयविजयौ तदर्थं त्वमवतीर्ण इत्याशयः । अनप्राणने पचाद्यच् । किम्भूतः परिजनो भृत्य इव विधेयं त्रिभुवनं येन । कुतः तस्मिन्सनकादौ त्वयि वरिवसनरि नमस्कर्तरि सति । अन्यत्समानम् । यद्वा अवं हरिगाथागायनं तेन जीवतीत्यवाणो नारदः अन्यत्पूर्ववत् । यद्वा अवं विष्णुस्मरणं तेन जीवतीति दुर्वासा मुनिः इन्द्रस्य महासम्पत्ति शापान्नाशयामास । यद्वा अवाणो विष्णुचिन्तको बलिरिन्द्रस्य

समृद्धिं यज्ञशतमध्यो मर्त्यलोके कृतवान् । यद्वा सुत्राम्णः पञ्च-म्यन्तमेतत् बलिरिन्द्रादपि उच्चैर्महतीं समृद्धिमधः पाताले चक्रे भुक्तवान् । वामनेन बद्धोपि सत्यान्न चलित इति भावः । यद्वा अवतीत्यवं रक्षणं तेन जीवतीत्यवाणः प्रह्लाद भक्तिम्प्राप्येन्द्रस्य समृद्धिमधश्चक्रे । यद्वा न विद्यते वाणः दुःखरूपो यस्येत्यवाणो हिरण्यकशिपुः । यद्वा न विद्यते वाणरूपश्शत्रुर्यस्येत्यवाणस्सप्तम इन्द्रः पूर्वं इन्द्रस्य समृद्धिमधश्चक्रे तत्वज्ञानाधिक्यात् । यद्वा अवाणः अजामिलोम्रियमाणो नारायणेत्युक्त्वा वैकुंठं प्राप्येन्द्र-स्यर्द्धिमधश्चक्रे । अलं पल्लवितेन ।

## ॥ श्रीरामपक्षे ॥

अवाणो निहतशत्रुः रावणः इन्द्रस्य समृद्धिमधश्चक्रे त्वयि लयम्प्राप्य पूर्वजन्मनि नमस्कर्तरि सति । यद्वा अवाणो हनुमा-निन्द्रं जित्वा । यद्वा अवाणो मुक्तिमान् विभीषणः इन्द्रस्य सतीमेकमन्वन्तरस्थायिनीं समृद्धिमधश्चक्रे कल्पपर्यन्तं स्थित्वा । यद्वा अवाणो ब्रह्मपुत्रो वशिष्ठः स्वर्गमधश्चक्रे त्वत्सेवार्थमागतः ।

## ॥ श्रीकृष्णपक्षे ॥

वाणो बाणासुरः इन्द्रस्य समृद्धिमधश्चक्रे त्वत्तोऽभयम्प्रा-प्येति शेषः । यद्वा इन्द्रादपि परम उत्कृष्ट सुत्राम्णोवरद इति सम्बोधनम् । अवाण इन्द्रस्त्वया गोवर्द्धनोद्धारणे व्रजरक्षया अधश्चक्रे तुच्छीकृतः पुनः सतीमृद्धिमत्युच्चैश्चकार कर्मणि प्रत्ययः । यद्वा अमुं हरिं गच्छन्ती स्यवाः यज्ञस्त्रियः अणतीत्यणा

अवाश्च ता अणाश्चेत्यवाणास्तत्समूहे अवाण इत्येकं वचनम्। इन्द्रस्य सतीमिन्द्राणीं पुन रुच्चैः ऋद्धिमप्यधश्चक्रे।

## ॥ शिक्षापक्षे ॥

हे परम वरद अम् हरिं वान्ति गच्छन्ति अनेनेत्यवो विष्णुप्रसादस्तेन जीवतीत्यवाणो भवान् विष्णुप्रसादेनाजीजियदित्यर्थः। इन्द्रस्य समृद्धिमुच्चैरतिकठोरां विश्वरूपमारणादिरूपां स्वनिंद्यकर्मणाऽधश्चक्रे तुच्छी चकार। किम्भूतः परिजनैर्भृत्यैर्विधेयं त्रिप्रकारकाणि भुवनानि जलानि यस्मै जीवनं भुवनं वनमित्यमरः। शीतं पानाय उष्णं शीते स्नानाय मध्यं शीते पानायेति विवेकः त्वत्तोऽन्यस्य विष्णोश्चरणोयोस्तस्मिन्तव पितरि नमस्कर्तरि सति देवप्रसादेन भवान् लब्धः। किञ्च कस्यापि शिरसस्त्वयि अवनतिरुन्नत्यै शुभाय न भवति। निंद्यकर्मणा त्वं महाऽशुभः।

## ॥ स्त्रीपक्षे ॥

वेत्यव्ययम् अणतीति अणः यं जनः इन्द्रभोगं अधश्चक्रे त्वया सह भोगेन तन्न चित्रम् त्वच्चरणयोरस्मिन्वरि बलतरि सति तदाह तस्मिन्त्वयि कस्यापिशिरस अवनतिरुन्नत्यै न भवति किन्तु सर्वस्यापीत्यर्थः। हास्यपरम् ॥१३॥

# अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा, विधेयस्यासीद्यस्त्रिनयन विषं संहृ-

तवतः। स, कल्माषः कण्ठे तव न कुरुते न श्रियमहो, विकारोऽपि श्लाघ्यो भुवन-भयभङ्गव्यसनिनः ॥१४॥

इदानीं त्रैलोक्यदहनकर्तुर्विषस्य करतलीकृत्य पानेन महदुपकारकर्तृत्वं च प्रकटयन्स्तौति अकाण्डेति। हे त्रिनयन त्रीणि नयनानि यस्येति। लोचनं नयनं नेत्रम् इत्यमरः। अनेनास्य तृतीयनेत्रोन्मीलने झटिति ब्रह्माण्डदहनकर्तृत्वं विद्यमानं कियदिति सूचितम्। विषं संहृतवतः करतलेन पानं कृतवतस्तव कण्ठेयः कल्माषो नीलिमा आसीत् सः श्रियं शोभां न कुरुते किन्तु कुरुत एवेत्यर्थः ननु त्रैलोक्यदहनकरं विषं कुतः पीतवान् इत्यत आह। काण्डस्समयः न काण्डः अकाण्डः अकाल इत्यर्थः। काण्डोऽस्त्री दण्ड बाणार्थवर्गाबसरवारिषु इत्यनेकार्थः तस्मिन् ब्रह्माण्डस्यक्षयो नाश अकाले महाप्रलय इत्यर्थः। तेन चकिता भीता ये देवा इन्द्रादयस्तेषु कृपा दया विधेया यस्य तस्य। किञ्च भुवनस्य चतुर्दशलोकस्य भयं तस्य भंगे नाशे व्यसनमभ्यासो यस्य तस्य महदुपकर्तुर्विकारोऽपि श्लाघ्य प्रशंसनीय एव। एवञ्चोपकर्ता त्वं ममाप्युपकरिष्यसीति भावः।

## ॥ हरिपक्षे ॥

हे त्रिनयन त्रिजगत्प्रकाशक यस्तव कल्माषः कर्णमलमासी. त्प्रलय इति शेषस्स तव श्रियं यशोदयं न कुरुत एव। प्रथमं

तव कर्णाभ्यां जातं मलं ततो जातौ मधुकैटभावसुरौ ताभ्यां तव युद्धेन यशोदयम्। विषं प्रलयकालीनं जलं संहृतवतः नारायणरूपेण स्वशयनाय स्वीकृतवतः। विषमप्स्वुचेत्यनेकार्थः। पुनः भुवनं जलं तस्मिन् यद्भयं तस्य यो भंगो नाशस्त स्मिन् व्यसनिनस्तव ब्रह्मणः कंठे उत्कंठापूर्वकस्मरणे सति तवेति शेषः अकाण्डे अकाले यो ब्रह्मण अंडं ब्रह्माण्डं तत्क्षयस्तेन चकितो देवो ब्रह्मा असुरौ मधुकैटभाख्यौ तेषां कृपया विधेयस्य कृपया तेषां वचने स्थितस्येत्यर्थः। विधेयो विनयग्राही वचने स्थित आश्रवः इत्यमरः। कुठि शोके धातुः शाक इह आध्यानमुत्कण्ठापूर्वकस्मरणं कण्ठतीति कंठः पचाद्यच्। यद्वा भुवनेत्यादि तवेत्यस्य विशेषणम् तत्रायमर्थः भुवनस्य भयं याभ्यां तयोर्भंगे व्यसनिनोयुद्धं कृतवत इत्यर्थः। भुवने जले यद्भय मिति वा तस्य कण्ठे स्मरणे इत्यन्वयः। एवं च यदि मधुकैटभाख्योन हन्येत तर्हि ब्रह्माण्डमभक्षयेत्तथा च जगत्प्रपंचाभाव इति महानर्थः स्यादिति उपकर्तुर्विकृतिरपि श्लाघ्या एवेत्याह विकारेति। क्वचिद्विकारोपि श्लाघ्यः स्तुत्यो महोपकर्तुः। सत्वगुणावच्छिन्नस्य तमोगुणावच्छिन्नत्वं विकार इति स्फुटमेव। यद्वा विषं प्रलयकालीनं जलं संहृतवतो विगाह्यमानस्य तव यः कल्मातो निद्योविकारो वराहाद्यवतारस्स कंठे वर्णयतामिति शेषः श्रियं न कुरुते कुरुते एवेत्यर्थः। यद्वा विषं संहृतवतः समुद्रान्निस्सारयतस्तव निद्यः कच्छपावतार इत्यर्थः। अत्र भुवनं देवानां लोकं तस्य भयभंगे व्यसनिनः अमृ-

तोत्पादने यत्नं कृतवतः। अमृतोत्पादनेन कृपा विधेया यस्य।

## ॥ श्रीरामपक्षेऽपि ॥

त्रयाणां भ्रातृणां नयन प्रकाशक प्रेरकेति वा। विषं सरयू जलं अवगाह्यमानस्य जलक्रीडारतस्य तव यः कल्माषः मुखे म्लानिमा आसीत्सः वर्णयतां कंठे श्रियं न कुरुते कुरुत एवेत्यर्थः किम्भूतस्य चकिता ये देवा असुरा रावणादयस्तेषु कृपा विधेया यस्य तदर्थमवतीर्णस्येत्यर्थः। अकाण्डे कालातीतब्रह्माण्ड एव क्षयं निवासो यस्येत्यपि सम्बोधनम्। अन्यत्समानम्।

## ॥ श्रीकृष्णपक्षे ॥

त्रयाणां गोपगोपीगवां नयन प्रवर्तक हे कृष्ण विषं कालियह्रदे विषयुक्तं जलं संहृतवतः शुद्धं कृतवतस्तत्र यः कल्माषः कालियदंशनेन मर्मसु विकार आसीत्सवर्णयतां कंठे श्रियं कुरुते। चकितो यो देवो नन्दः असुरः कंसस्तयोः कृपया वचने स्थितस्येत्यन्यत्समानम् एवञ्चोपकर्ता भयापहर्ता च भवानस्माकमप्युपकारं करोत्विति भावः।

## ॥ शिक्षापक्षे ॥

त्रयाणां क्षत्रियवैश्यशूद्राणां नयन प्रवर्तक प्रेरक हे त्रिनयन ब्राह्मण। अकाण्डे अकाले यो ब्रह्माण्डक्षयो धत्तूरादिना देहनाश अकालमृत्युः तस्माच्चकित भीतियुक्त इत्यपि सम्बोधनम्। विषभक्षणम् कृतवतस्तव यः कल्माषो देहे कलुषितत्वमासीत्स श्रियं शोभां न कुरुते। देवासुरेषु कृपा यस्य तस्येश्वरस्य

आसमंतात्भावेन विधेयस्य शिष्यस्य तत्प्रसादज्जातस्य पुनः न विद्यते भुवनभयभंगे ईश्वरे व्यसनमभ्यासो यस्य तस्य । सुकर्मिणोपि विकृतिर्न प्रशंसनीया किंतुश्लाघ्येत्यतआह विकारः श्लाघ्यो न भवति ।

॥ स्त्रीपक्षे ॥

जाम्बवत्याद्याः प्रति श्रीकृष्णवाक्यम् । त्रयाणामुत्तममध्य-मनिकृष्टानां जनानां नयन स्वगुणैस्स्वस्मिन्प्रवर्तक हे त्रिनयन स्त्रीजनसमूह । कण्ठे श्यामविन्दुनातिलावण्यताम्भावयन् कथयति अहो इत्याश्चर्ये तत्र कण्ठेयः कल्माषः आसीत्सः श्रियं कुरुत एव । कल्माषो नीलिमा बद्धश्यामममणिरिति वा । किम्भू-तस्य विषं संहृतवतः पीतवतश्शिवस्य अकाले ब्रह्माण्डक्षयस्तेन चकित देवासुरेषु या कृपा सा विधेया यस्मिन् । स्मरारेः कृपापात्रत्वाद्गुणाति शयत्वं ध्वन्यते । शिवस्य भुवनभय-भंगव्यसनिनः ॥१४॥

असिद्धार्था नैव क्वचिदपि सदेवासुर-नरे, निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः । स पश्यन्नीश त्वामित-रसुरसाधारणमभूत् स्मरः स्मर्तव्यात्मा नहि वशिषु पथ्यः परिभवः ॥१५॥

इदानीं व्यवस्थितिं दर्शयन्स्तौति असिद्धेति । त्रिजगद्धरी-भूतकर्तुः स्मरस्य दहने सामर्थ्यादीशेति सम्बोधनम् । ईष्टे इतीशं पचाद्यच् यस्य स्मरस्य विशिखा बाणा सदेवासुरनरे देवैस्सह वर्तन्तेऽसुरनरा यस्मिन्तादृशे जगति क्वचिदपि असिद्धार्था न सिद्धोऽर्थो कार्यो येषां ते तादृशास्सन्तो नैव निवर्तन्ते अत एव जयिनः जयो विद्यते येषां ते जयनशीला इत्यर्थः यद्वा जयिन इति स्मरस्य विशेषणम् । सः स्मरस्त्वां इतरे ये सुरा देवास्ततत्-संधारणं समं पश्यन्स्मर्तव्यात्मा स्मर्तव्य आत्मा शरीरो यस्य सः स्मरणीयशरीरो भस्मीभूदित्यर्थः । हि युक्तोयमर्थः वशिषु जितेन्द्रियेषु परिभवः अनादरः पथ्यो हितो न भवति सद्यः स्वस्मिन्नेव फलतीति भावः ।

## ॥ हरिपक्षे ॥

इतराः सुरा यस्मादिति सम्बोधनार्थः । यस्य बाणा असिद्धार्था नैव निवर्तन्ते सः स्मरस्त्वां साधारणं पश्यन्नरनारायणा-वतारे स्मर्तव्यः अभूत् । यतस्त्वां साधारणमपश्यन्नतस्त्वामजित्वैव पराजितस्स्वर्गं गत इत्यर्थः इत्यादि पूर्ववत् ।

## ॥ श्रीरामपक्षे ॥

यस्य रावणस्येति शेषः विशिखा क्वचिदपि न निवर्तन्तेस्म सः रावणस्त्वां साधारणं मानुषोयमिति पश्यन्स्मर्तव्यात्मा त्वया युद्धे मारितोऽभूत् । यद्वा साधारणं सर्वेषु समं स्वामीश्वरं पश्यन् मृत इति मद्भाग्यमस्य । किम्भूतः सः स्नेइवान्सीतायाम्

रसयतीति रस् क्विप्प्रत्ययः। यद्वा युद्धे देवासुराणां सत्वाम्बदे-वासुरेति सम्बोधनम्। यद्वा देवासुरैस्सह वर्तते तथा देवासुर-रूप। शान्ता अशान्तास्तद्य रूपा इति पुराणे प्रसिद्धम्। यस्य बाणा नरे नरावतारे त्वयि असिद्धार्थाः अकृतकार्या एव निवर्त-न्तेस्म अन्यत्र जगति क्वचिदपि न।

## ॥ श्रीकृष्णपक्षे ॥

यस्य शिशुपालस्येत्यादिपूर्ववत्। यद्वा यस्य बाणाः विश्वा-मित्रादिष्वपि अकृतकार्या नैव निवर्तन्ते सः स्मरः नहि पथ्यो हित अभूत् शत्रुरित्यर्थः अस्माकमिति शेषः। कुतो न हितः नरावतारे त्वयि स्वजनयिनः स्त्रीजनान् जगति गच्छति सति किं कुर्वन् साधारणं त्वामपश्यन्। यदि विषमं पश्येत्तर्हि अस्मास्वपि त्वां योजयेदिति भावः। नन्वेवं शत्रुर्मारणीय इतिचेत्तत्राह स्मर्तव्यात्मा नतु साक्षादुपलब्धः। किम्भूतः परिभवः संसारबंध हेतुभंगघांस्तु संसारबंधच्छेदकर इति वैलक्षण्या त्वच्चरण-सेवया निष्कामैस्त्वमेवाश्रयणीय इति भावः वयमपि तादृश भविष्याम इति ध्वनिः। सः स्मरः पूर्वं स्मर्तव्यात्मा, त्वा पश्यन् अभूदुत्पन्नः। साधारणं यथा स्यात्तथा त्वद्दर्शनेन त्वत्तुल्यरूपः सन् पुत्रत्वेन जातः। न तु सर्वैर्गुणैः समः तथाच श्रुतिः न तत्समश्चाभ्यधिकश्च विद्यते। हि यतो वशिषु जितेन्द्रियेषु न पथ्यो न हितः अतएव परिभवः स्त्रीषु योजयन् संसार

बन्धहेतुः । एवं च त्वद्दर्शनं स्वरूपं ददात्यन्यत्किमुतेति निश्च येन वयमपि प्रवृत्ताः स्मेत्यस्माकमपि स्वार्थंऽभविष्यतीति भावः।

## ॥ शिक्षापक्षे ॥

हे ईश ऐश्वर्ययुक्त पुनः इतरास्सुरा देवा यस्मात्तथेति सम्बोधनार्थः। स्मरः साधारणं यथा स्यात्तथा तुच्छमित्यर्थः त्वां पश्यन्नहि एव्य अधःपातनहेतुरभूदित्यर्थः स्मरणीय आत्मा शरीरो यस्य सौन्दर्यत्वेन। पुनः परिभवः स्त्रीषु तिरस्कर्तेत्यर्थः । खरचरपादेन ताडितोपि पुनः पश्चात्प्रवृत्तो-स्तीति भावः ।

## ॥ स्त्रीपक्षे ॥

रुक्मिण्यादीन्प्रति श्रीकृष्णवाक्यम् । पूर्ववत्सम्बोधनार्थः । सः स्मरस्त्वां पश्यन्साधारणं यथा स्यात्तथा अभूत् त्वल्ला-वण्यातिशयेन तल्लावण्यतिरस्करणान्निर्गर्वोऽभूदित्यर्थः । किम्भूतः स्मर्तव्यात्मातिसौन्दर्यत्वेन । ननु कुतस्तस्यतिरस्कारः । वशिषु परिभवो न पथ्यः । अनादरकारकत्वात्तस्याप्यनादर इतिभावः ॥१५॥

# मही पादाघाताद्व्रजति सहसा संश-यपदं पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्ण-ग्रहगणम् । मुहुर्द्यौर्दौःस्थ्यं यात्यनिभृत-

**जटाताड़िततटा, जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥१६॥**

इदानीं जगद्रक्षार्थं तव नटनेन त्रिलोकी त्रस्तीति प्रदर्शयन्स्तौति। हे ईश त्रिलोकीमर्दकराक्षसमोहनं जगद्रक्षा तस्यै त्वम् नटसि स्वगात्रविक्षेपेण तं मोहयसि। नटनृत्तौ गात्रविक्षेपमात्रम् नृत्तम्। नर्तनेन त्रिलोकी तु त्रस्ता भवतीत्याह मही पृथिवी तव पादयोराघातः पादाघातस्तस्माच्चरणविन्यासात्सहसा अकस्मात्संशयपदं संशयात्मकं संकटं व्रजति तथा विष्णोः पदमाकाशञ्च किम्भूतम् भ्राम्यन्तौ भुजावेव परिघौ मुद्गरौ ताभ्यां रुग्णाः दुःखिताः ग्रहगणाः सूर्यादयो यस्मिंस्तत्। रुज रोगे क्त प्रत्ययः। तथा अनिभृता या जटा तया ताड़ितं तटं यस्यास्सा द्यौर्मुहुर्दौःस्थ्यं याति दुःखेन स्थितो दुःस्थस्तस्य भावो दौःस्थ्यम्। गुणवचनत्वात् ष्यञ् तस्या दुःखेन स्थितिर्भवति। नन्विति वितर्के ईश्वरविभुना प्रभुता वामैव अनुकूलं कुर्वन् प्रतिकूलमपि भवति यद्वा वामैव प्रतिकूलापि मनोहरैव भवति।

॥ हरिपक्षे ॥

जगद्रक्षायै त्वं नटसि नट इवाचरसि रामायणादिरूपाभिनयं करोषीत्यर्थः। आचारे क्विप्। अतएव तव विभुता अवताररूपा वामैव मनोहरैव च। यदा यदा मही रंहसा सङ्कटं व्रजति कुतः

महीम् पिबति संकोचयतीति महीपोऽधर्मस्तस्मात् । किम्भूतात् न विद्यते घातो नाशोपायो यस्य तथा आघातात् । आङ् अनिषेधे । तवावतार एव नाशोपाय इत्यर्थः । भ्राम्यद्भुजे तथा जटेत्यत्र राक्षसानामिति शेषः । यद्वा अत्युग्र नृसिंहा-वतारे घनस्तवति । न निभृता धृता जटा येन तदनिभृतजटं शिरश्शिरोरुहोधा येन ताड़ितं जटं यस्याः सा । अन्यत्पूर्ववत् ।

## ॥ श्रीरामपक्षे ॥

स्वकर्मानुचर्येनगूढ़ो नटसि नट इवाचरसि । तव चरणविन्यासान्मही असंशयपदं दुःखाभावसौख्यं व्रजति । भ्राम्यन्तौ भुजावेव परिघौ तयो रुक् दीप्तिर्यस्मिँन्तदाकाशं च । रुच दीप्तौ क्विप् । पुनः ग्रहाणां सूर्यादीनां गणस्समूहो यस्मिन् । तथा द्यौः दौस्थ्यं न याति ताड़िततटा यशसेति शेषः । तव अवतारप्रभुता मनोहरैव । अनिभृता विमुक्ता जटा यस्याम् ।

## ॥ श्रीकृष्णपक्षे ॥

तव नर्तने मही असंशयपदं व्रजति । नर्तनं दृष्ट्वा ग्रहा अपि कृतार्था भवन्ति । ताड़ितेत्यत्र गानेनेति शेषः । तव विभुना स्त्रीभिस्सह नर्तनादि सर्वेषां सुखकारिकैव । अनिभृता विमुक्ता जटा स्त्रीणां धम्मिल्लं यस्यां सा । अन्यत्पूर्ववत् ध्वनिश्च पूर्ववत् । यद्वा रोषयुक्ताया इदं वाक्यम् । या मही जगद्रक्षायै अस्ति सा तव पादाघातात् संकटं व्रजति । आकाशमपि । द्यौरपि दौस्थ्यं याति । एवं तव कपटाचरणेन त्रिलोक्यपि त्रसति

वयं क्वेति भावः । द्यौः ताड़िततरा कपर्देन । अतस्तव विभुता सर्वेषां अहितैव । किम्भूता न निभृता संभृता जटा मूलं यस्याः सा निर्मूलैव । मूले लग्नकचे जटेत्यनेकार्थः ।

## ॥ शिक्षापक्षे ॥

ताड़ितेत्यत्र अन्धकर्मणेति शेषः ।

## ॥ स्त्रीपक्षे ॥

तव चरण विन्यासान्मही तवातिकोमलौ चरणौ दृष्ट्वा मयि कथं धास्यसीति संशयात्मिका भवति । भ्राम्यन्भुजपरिघाभ्यांकम्पितं ग्रहगणं यस्मिन्तादृशमाकाशं च । ग्रहगणानामपि त्वयि स्पृहा भवति । गानेन लावण्यादिश्रवणेन वा ताड़िततटत्त द्यौरपि दौस्थ्यं याति तत्स्था अपि जना महता कष्टेन स्थिरा भवन्तीत्यर्थः । नन्वहो अस्माकं कामाद्रक्षायै या तव प्रभुता सा वामा हितापि प्रतिकूला अनिभृतजटा विमुक्तधम्मिल्ला ॥१६॥

वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते । जगद्द्वीपाकारं जलधिवलयन्तेन कृतमित्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥१७॥

गङ्गायास्तव शिरसि प्रदर्शनेनाकाशव्यापकत्वेन च दिव्य-शरीरस्य महाकायत्वं तर्कयन्स्तौति वियदिति । हे ईश इत्यनेन लिङ्गेन तव दिवि भवं दिव्यं वपुः धृतं महिम येन तादृशमुन्नेयं सर्वेभ्यो महत्तरं तर्कणीयम् । णीञ प्रापणे अचोयदिति यत्प्र-त्यय। केन वियद्व्यापी आकाशव्यापकः व्याप्तुं शीलं यस्य सः व्यापी वियदि व्यापी वियद्व्यापी । आप्लृ व्याप्तौ उपसर्गे णिनिः अतएव तारागणैर्गुणिता गौणीकृता ये फेनानामुद्गमा उद्ग-मास्तैः रुचिरशोभा यस्य; एवमपरिमेयरूपायाः अपि गङ्गाया-शिवशिरसि लघुतां दर्शयन्ति प्रवाह इति । वारां जलानां आपः स्त्री भूम्नि वार्वारीत्यमरः यः अपरिमेयप्रवाहस्तव शिरसि मस्तके पृषतो जलकण इव लघु अल्पं यथा स्यात्तथा दृष्टः पृषतलघु इत्यत्र उपमानानि सामान्यवचनैरित्युपमित समासः । तेन प्रवाहेण जलधिरेव वलयं कङ्कणवद्धावर्तनं कृतम् । जगद्द्वीपानां जम्ब्वादिसप्तकानामाकारं सदृशम् । अगस्त्यमुनिना यदा समुद्राणां जलं पीतं तदा गङ्गाप्रवाहेणैव पुनस्तत्पूरणमिति पुराणप्रसिद्धम् । ब्रह्माण्डं खण्डयन्ती हरशिरसि जटावल्लिमु-ल्लासयन्ती स्वर्लोकादापतन्ती कनकगिरिगुहागण्डशैलात्स्ख-लन्ती । क्षोणीपृष्ठे लुठन्ती दुरितचयचमूं निर्भरं भर्त्सयन्ती पाथोधिं पूरयन्ती सुरनगरसरित्पावनी नः पुनातु ।

---:०:*:०:---

## ॥ हरिपक्षे ॥

हरिं शिशुमारचक्ररूपं वर्णयन्स्तौति । धृतो महिमा येन तत् ब्रह्मादीनां स्थितिस्तस्मिन्नेवेतिभावः । ब्रह्माण्डविवराद्ब्रह्मलोकमास्वाद्य तस्मादवतरन्त्या गङ्गायाः प्रवाहश्चन्द्रमण्डलमाप्लाव्य तव शिरसि पृषत लघुदृष्टः महाकायत्वात् । तेन प्रवाहेण जलधिवलयं पृथिव्याः कंकणवद्रावर्तनं कृतं तं चतुर्द्धा प्रविश्योत्तमं कृतन् । अन्यत्समानम् । यद्वा तारेत्यादि वलयमित्यस्य विशेषणम् तारागणा गुणिता येन तादृशो यः फेनोद्भवस्तेन रुचिर्यस्य ।

## ॥ श्रीरामपक्षे ॥

तव दिव्यमनिर्वचनीयं वपुः अतएव धृतो महिमा येन सर्वेभ्य उत्कृष्टम् । शिरसि वारां यः प्रवाहः भृत्यकृतस्नानीयजलप्रवाहः पृषताद्बिन्दोरपि सूक्ष्मो दृष्टः प्रथमं प्रवाहः पश्चात्सूक्ष्मो दृष्टः । आकाशव्यापकः पुनः ताराणां मुक्तानां मुक्ता शुद्धौ तु तारः स्यादित्यनेकार्थः । गणोनिर्मितहारविशेषस्तेनगुणिता ये फेनोद्गमास्तैः रुचिर्यस्य निर्मलहारशोभया शोभातिशयं जलानामिति भावः । यद्वा वपुषो विशेषणम् तत्रायमर्थः ॥तारागणगुणित फेनोद्गमानां रुचिर्येन मुक्तागण इति भूषणानामुपलक्षणं । वपुश्शोभयैव भूषणानां शोभातिशयमिति भावः । तेनैवानेन प्रवाहेण जलधिरिव वलयं कृतं हस्ते कंकणं

निर्मलं कृतमित्यर्थः । प्रथमं शोभितं स्नानीयजलसंयोगादतिशोभितम् । जगद्द्वीपाकारं वर्तुलम् ।

## ॥ श्रीकृष्णपक्षे ॥

वपुः दिव्यम् स्वर्योषितां योग्यम् । तव शिरसि धारां इतीजलानां यः प्रवाहः सः त्वया सूक्ष्मो दृष्ट उपलब्धस्त्वयान गणितमित्यर्थः । तेनैवानेन प्रवाहेण जलधित्वलयं पृथिव्याम् समुद्रवत्कृतम् । द्वीपाकारं वर्तुलम् । अस्माकं ताडनं तु त्वया तव गणितं कत्थनं किं गणयिष्यसि अतो धैर्यमवलम्ब्य स्थातव्यम् । शेषं समानम् ।

## ॥ शिक्षापक्षे ॥

तव दिव्यं देवानामिव सुन्दरं वपुरस्ति । धृतमदिम त्रिभ्यो वर्णेभ्य उत्तमम् धृतमहिमदिव्यामति समस्यन्तरूपदम् । पुन शिरसि विराट् शिरस्थानीये ब्रह्मलोके उन्नेयम् प्रापणीयम् । कुमार्गं त्यक्त्वाधर्ममातिष्ठ । धारां गङ्गाजलानां यः प्रवाहः सत्वया पृषत लघुबिन्दोरपि तुच्छो दृष्टो गणितः किम्भूतः वियद्व्यापी तारागणगुणितफेनोद्गमरुचिश्च । गङ्गास्नानमपि त्वयात्यक्तम् । शेषं शिवविष्णुपक्षवत् ज्ञेयम् ॥ यद्वा उन्नेयं धर्मे इति शेषः । शिरसि शिवस्येति शेषः । तारागणगुणित फेनोद्गमे रुचिर्यस्य सः इति योजनीयम् । अनेन गङ्गाया माहात्म्यातिशयं ध्वन्यते । तस्या निन्दनेन तव सर्वेभ्योऽधमत्वञ्च ।

## ॥ स्त्रीपक्षे ॥

अनेन लिङ्गेन तव दिव्यं वपुः धृतो महिमा लावण्यादि येन तत्सर्वोत्तम मुन्नेयम् तर्कणीयम् । केनेत्याह तारागणां मुक्ताफला-नामासमन्ताद्भावेन गणास्तैर्गुणिता ये फेनोद्गमास्तैः कञ्चि-दीस्य । वपुषः पयः फेननिभत्वेनातिकोमलत्वं व्यज्यते । एवं गङ्गाजलकणेनैव त्वयामहत्त्वं लब्धम् । वारां यः प्रवाहः गङ्गा त्वया शिरसि पृषतलघु दृष्ट उपलब्धः पूर्वजन्मनीति शेषः । किम्भूतः प्रवाहः इत आरभ्याकाशमभिव्याप्य स्थित इत्यर्थः । शेषं हरिपक्षवद्बोध्यम् ॥१७॥

**रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो रथाङ्गे चन्द्रार्कौ रथचरणपा-णिः शर इति । दिधक्षोस्ते कोऽयं त्रिपु-रतृणमाडम्बरविधि विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ॥१८॥**

सृष्टिसमये मायया क्रीडत ईश्वरस्य भ्रूभङ्गमात्रेणैव सर्व-करणेसामर्थ्यातिशयं ध्वनयन् त्रिपुरदाहे उत्साहविशेष रचना-मात्रं प्रदर्शयन् स्तौति रथ इति । महीपादस्यारभ्य त्रिपुरश्लोकेषु ईश्वरत्वेनैव वर्णनादन्यस्तस्योधनमनपेक्षयेशोति पदम्पूर्वतोऽनुष

ज्यते हे ईश त्रिपुरतृणं तृणसमानं त्रिपुरासुरं दिधक्षोः दग्धुमि-च्छोः । सनाग्रंशभिन्न वः । ते कोऽयमाडम्बर विधिः । क्षोणी पृथ्वी रथः शतधृतिर्ब्रह्मा यन्ता सारथिः अगेन्द्रो मेरुः धनुः । चन्द्रार्कौ रथचक्रे रथचरणं चक्रं पाणौ यस्य सविष्णुः शरः बाणः । इति शब्दः प्रकारे । नन्वेवं किम् परतंत्रोयमिति चेदाह विधेयैरिति । प्रवृत्तिनिवृत्योविधातुं शक्यन्ते ये ते विधयाः स्वाधीनाः तैः क्रीड़न्त्यः प्रभुधिय ईशबुद्धयो न परतन्त्रा न परा-धीना इत्यर्थः । परतंत्रः पराधीनः परवान्नाथवानपि इत्यमरः ।

## ॥ हरिपक्षे ॥

त्रिपुरतृणं दिधक्षोः शिवस्याडम्बरविधिः ते तवैवेत्यन्वयः । तव कोयेनैव भस्मीभूत इति भावः । विधेयैरिति भ्रूभंगमात्रेणैव सर्वंकर्तुं शक्त इति भावः ।

## ॥ श्रीरामपक्षे ॥

त्रीणि त्रिकूटपर्वतश्रृङ्गाणि पुरं यस्य तत् लङ्कापुरं दिधक्षो-स्तव रामचन्द्रस्य कोऽयम् ऋक्षवानरसहायादि अपि तु आडम्बरविधिः रचनामात्रमित्यर्थः । भ्रूभंगमात्रेणैव सर्वं कर्तुं शक्तोसि तदेवाह रथः क्षोणीवेत्येवं सर्वत्र रूपकालंकारः शेषं समानम् ।

## ॥ श्रीकृष्णपक्षे ॥

त्रिषु लोकेषु विश्रुतं पुरं काशीपुरं अन्यत्पूर्ववत् । त्वंतु

स्वाधीन एव अस्माकं तु त्वदाधीनत्वात्कार्यं कर्तव्यमेवेति ध्वनिः ।

## ॥ शिक्षा पक्षे ॥

तव यः आडम्बरविधिः स त्रिपुरं तृणमिव दिधक्षोश्शिवस्य कोपम् तमेवाह । रथः पृथ्वी शतां मध्ये धृतिर्धैर्यो यस्य सादशोयन्ता सारथिरगेन्द्रः क्रीडाशैलः धनुश्शस्त्रं रथांगे चन्द्रार्काविव शरो बाणः किम्भूतो यन्ता रथे चरणौ पाणौ च यस्य सः एते ऐश्वर्यलक्षकाः त्वं तु स्वेच्छया वर्तमान इत्याह खलु निश्चितं विधेयैस्स्वाधीनैः क्रीडन्त्यः प्रभोरैश्वर्ययुक्तस्य बुद्धयो न परतन्त्राः । एव श्रीमदस्याधिक्यं दर्शितम् तदुक्तम् नह्यन्यो जुषतो योष्यान् बुद्धिभ्रंशो रजोगुणः श्रीमदादाभिजात्यादि यत्र स्त्री द्यूतमासवः ।

## ॥ स्त्रीपक्षे ॥

ते य आडम्बरविधिरैश्वर्यसामग्री सत्रिपुरतृणं दिधक्षोशिवस्याशुतोषस्य कोपम् तत्प्रसादेनैव त्वया लब्धम् । तदेवाह रथेत्यादि पूर्ववत् । त्वं तु लावण्यादिपर्वित स्वाधीना ॥११॥

हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोनेतस्मिन्निजमुदहरन्नेत्रक-

**मलम् । गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥१९॥**

इदानीमीश्वरार्पितात्मनो विक्रीतपशुवत्तस्य स्वशरीरे प्रति जागरूकत्वाभावाद्भक्तिं तदनुग्रहपुंजेन भक्तिफलञ्च प्रदर्शयन्स्तौति । हरिरिति । हे त्रिपुरहर हरिस्ते पदयोस्साहस्रं सहस्रसंख्यापरिमितं कमलबलिं कमलोपहारमाधाय समर्प्य निजंनेत्रकमलं कमलसादृश्यत्वेन नेत्रमुद्हरन् निजं नेत्रमेवोप-हरिष्यामीति निश्चित्योत्पाटितवान् । कस्मिन्सति । तस्मिन् कमलबलौ एकेन कमलेन ऊने हरिभक्तिपरीक्षार्थं हरेण गोपिते सतीत्यर्थः । अतो महती भक्तिरस्येत्यर्थः । तदाह भक्त्युद्रेक अत्यन्तंप्रकर्षो यस्य सः । परिणतिम्भक्तिपरिपक्वताञ्च गतोऽसौ हरिः चक्रवपुषा चक्रवच्छरीरेण त्रयाणां जगतां रक्षायै पालनार्थं जागर्ति निरालस्येन वर्तते । अनेन भक्तिफलं स्तूयते ।

## ॥ हरिपक्षे ॥

त्रिलोकादुपरि पुरं त्रिपुरं वैकुण्ठपुरं तं हरति प्रापयति भक्तानिति सम्बोधनार्थः । हरिरिन्द्रः अष्टममन्वन्तरे इन्द्र भावी बलिः ते पदयोः साहस्रं न सहस्रसंख्यापूरकं शतमित्यर्थः ।

शतयज्ञे शतधार कमलोपहारमाधाय समर्प्य शतयज्ञे त्वां सम्पूज्य त्वयि निजमात्मानमहरत्समर्पयामास अत एव एकोऽद्वितीयः किंभूतमात्मानम् नेत्रमेव कमलं यस्मिन्। चक्रवपुषा स्वसैन्य-चक्रशरीरेण। अन्यत्समानम्। यद्वा हरिरिति वर्तमानइन्द्रस्ते पदयोरसाहस्रं शतावरं शतयज्ञे कमलवलिं समर्प्य तस्मिन्नेत-दुःखादिवर्जिते स्वर्गे निजमात्मानं स्थापितवान्। यद्वा इन्द्रस्ते पदयोः कमलवलिमाधाय हस्ते गृहीत्वा निजं नेत्र कमलं उदहरत् सादरमपश्यत्।

## ॥ श्रीरामपक्षे ॥

रावणवधे सहस्रनेत्रकमलवलिमिवेति लुप्तोपमा आधाय सादरं दृष्ट्वा। एकोऽद्वितीयः अन्यद्वितीयपक्षवत्।

## ॥ श्रीकृष्णपक्षे ॥

गोवर्द्धनोद्धारणे कृष्णेन निरहंकृतस्य शक्रस्य भक्तिं भक्ति-फलं च दर्शयन् स्तौति अर्थस्तु पूर्ववत्।

## ॥ शिक्षापक्षे ॥

जनं शिक्षयन् शिवं प्रार्थयति अर्थस्तु शिवपक्षवत्।

## ॥ स्त्रीपक्षे ॥

हरिरिन्द्रस्ते पदयोः सामीप्ये सप्तमी पदसामीप्ये अग्रे इत्यर्थः अलवलिं अलतीत्यलः पर्याप्तो बलिः तम् निधाय साहस्रं निजं नेत्रकमलमनेतस्मिन्दुः खादिवर्जिते सुखकारके मुखे कं

सुखं यथास्यात्तथा उदहरत् सादरमपश्यत् । यद्वा सहस्रेण क्रीतं बलिम् अमूल्यमित्यर्थः । भजनं भक्तिस्सेवा तस्या उत्कर्षो यस्य सः अतएव परिणतिं गतः स्वत्कृतात् पाताद्भेतोरेश्वर्यरूपेण परिणतः । असौ इन्द्रः त्रयाणां जगती रक्षा वै जागर्ति ॥१६॥

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतु-
मतां क्व कर्म प्रध्वस्तं फलति पुरुषारा-
धनमृते । अतस्त्वां सम्प्रेक्ष्य क्रतुषु
फलदानप्रतिभुवं श्रुतौ श्रद्धां बद्ध्वा
दृढपरिकरः कर्मसुजनः ॥२०॥

इदानीमीश्वराराधनादेव पुरुषार्थावाप्तिरिति कथयन् । कर्मणा जायते जन्तुः कर्मणैव हि लीयते सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते । अस्ति चेदीश्वरः कश्चित्फलरू-प्यन्यकर्मणाम् कर्तारं भजते सोऽपि नह्यकर्तुः प्रभुर्हि सः इत्यादिस्मृतिनिष्पन्नेश्वरनिरपेक्षं कर्मैव प्रधानम्मन्यानान्मीमांसकान्निराकुर्वंस्तौति क्रताविति । हे त्रिपुरहर सर्वेशशुभाशुभ-कर्मणाम्फलदातृत्वात्त्वन्यसम्बोधनमनपेक्ष्य त्रिपुरहरेति पूर्वतोऽनुषज्यते क्रतुरिति सर्वकर्मणामुपलक्षणम् । क्रतौ यज्ञादिकर्मणि

सुते कालान्तरदेशान्तरफलोत्पादकशक्तित्वेन सत्वस्य यज्ञादि-कर्मणस्तदुत्पाद्यशोऽविनाशित्वाद्दृश्यते सति । क्रतु विद्यते येषां ते तथा तेषां यज्ञादिकर्मकारिणां फलयोगे फलदानाय इत्यर्थः । तन्निमित्तं त्वं जाग्रदसि निरालस्येन प्रवुद्धोऽसि । ननु कर्मणा जायते अस्तिचेदीश्वरः यागादेव फलं विद्धि शक्ति-द्वारेण सिध्यति सूक्ष्मशक्त्यात्मकमवापि फलमेवोपजायते इत्यादिस्मृतितात्पर्यविचारेण फलमेव जाग्रदस्ति किमीश्वरेणे-तिचेत्तत्राह क्व कर्मेति । प्रध्वस्तं जडं यज्ञादिकर्म चेतनपुरुष-स्याराधनम्बिना न फलति न फलदाने समर्थम् । यज्ञादिकर्मणि या फलोत्पादिका कर्मशक्ति स्सा फलदातुरीश्वरस्येति भावः ।

एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा
कर्माध्यक्षस्सर्वभूताधिवासस्साक्षीचेता केवलो निर्गुणश्च

इतिश्रुतेः । यत एवं त्वमेव सर्वकर्मफलदाता न कर्म अतस्त्वां क्रतुषु यज्ञादिकर्मसु फलदानिप्रति भुवं फलदानालग्नकमिव सम्प्रेक्ष्य श्रुत्यादिभिः पर्यालोच्य "कर्माध्यक्षेत्यादि श्रुतौ श्रद्धां विश्वासम्बद्ध्वा कर्मसुजनो दृढपरिकरः दृढः परिकरः प्रारम्भो यस्य तादृशो भवति ।

॥ हरिपक्षे प्येवम् ॥

॥ श्रीरामपक्षे ॥

सव यज्ञे सुते सांगोपांगं समाप्ते सति क्रतुमतां कर्तुं मिमीते

इति क्रतुमत् माङ्माने क्विप्रत्ययः । तेषां ईदृक् एतावानग्रं क्रतुरित्येवं यथाशक्ति वर्णयतां फलयोगे अन्नादिदानयोगे त्वं जाग्रदसि देशान्तरादागतेभ्य अन्नादिदाने आशक्तोऽसि । ननु यज्ञेनैव फलप्राप्तिः किं दानेनेतिचेदाह प्रध्वस्तं विनष्टं जडं कर्म यज्ञसमये आगतानाम्पुरुषाणामाराधनमृते क फलति न कापीत्यर्थः । अंगेन हीनम्भवतीति भावः । यतस्त्वं यज्ञे अन्नादिदाने आशक्तः अतस्सर्वो जनः श्रुतौ श्रुतिनिष्ठेषु क्रतुषु कर्मसु श्रद्धामनुरागं बद्ध्वा त्वयीति शेषः त्वामेव सम्प्रेक्ष्य ईश्वरोऽयम्मनुष्य इवाचरतीत्येवं दृष्ट्वा दृढ़परिकरो भवति मुक्तये इति शेषः ।

## ॥ श्रीकृष्णपक्षे ॥

क्रतौ कृष्णकारिते नन्दयज्ञे सुप्ते समाप्ते सति क्रतुमतां क्रतुशतं विद्यते येषामिन्द्राणामेकस्मिन्नपीन्द्रे श्रेष्ठत्वाद्बहुवचनम् । कर्म मनोगतयज्ञादिरूपं प्रध्वस्तं जातम् । फलयोगे त्वं जाग्रदसि प्रबुद्धोसि नन्दयज्ञस्य फलं त्वं दास्यस्येव । ननु कुतइन्द्रस्य यज्ञकर्म ध्वस्तमित्यत आह पुरुषस्य फलदातुस्तवाराधनमृते सेवाम्बिना क कर्म फलति न कापि । त्वामनादृत्यैश्वर्यमदेन गर्वितस्य शक्रस्य यज्ञं व्रजनाशाय वर्षणम् च निष्फलमिति भावः । त्वमेव दुष्टगर्वहरौ यज्ञादिकर्मफलदश्चेति ध्वनिः । यतस्त्वं कर्मफलदः त्वदाराधनम्बिना कर्मफलाभावः अत एव जनो नन्दादिः शेषं हरिहरयोः पक्षवत् ।

## ।। शिक्षा पक्षे ।।

इदानीमस्मदमन्दं नित्यकर्मत्यागाय रोगिणां खंडलड्डुकादिकमिवेश्वरं बोधयामीतिनिश्चित्यस्य तत्प्रशंसापूर्वकशिक्षयन्नीश्वरस्बोधयति । क्रतौ प्रारम्भोत्तरमल्प एव कालेन भ्रष्टे सति श्रुतौ विश्वासं बद्ध्वा जनः यज्ञादिषु दृढ़ारम्भो भवति । कुतः फलदातुरीश्वरस्याराधनम्विना क कर्म पूर्णं भवति । तदुक्तम्, यं यमर्थमुपादत्ते दुःखेन सुखहेतवे तं तं धुनोति भगवान् पुमान् शोचति यत्कृते इति । किम्भूते क्रतुमतां फलयाने फलस्य योगो यस्मादिति । किं कृत्वा श्रद्धां बध्नाति क्रतुषु फलदानप्रतिभुवमीश्वरमेवासम्प्रेत्य । त्वं तु जाग्रदसि ज्ञानवानसि । नित्यकर्मणामपि परमेश्वरसेवाम्विना न फलमिति परमेश्वराराधनं कुर्वन् कर्म कुरु ।

## ।। स्त्रीपक्षे ।।

त्वन्निमित्तं क्रतौ समाप्ते क्रतुमतां फलयोगे त्वं जाग्रदसि प्रफुल्लमुखाम्बुजा वर्तसे । निष्कामेनैव यज्ञादि फलेन त्वम्प्राप्तु योग्यासि अहो मम महद्भाग्यम् । ननु यज्ञफलेनैव यद्यहं सुलभा तर्हि सर्वेषामपि क्रतुमतामित्याह । पूर्षु जरायुजाण्डजस्वेदजोद्भिजशरीरेषु शेते साक्षित्वेन वर्तते इति पुरुषस्तदाराधनम्विना जडं कर्म क फलति न क्वापीत्यर्थः । एवं तावदनेकजन्मपुण्योदयेनेश्वराराधनपूर्वकं यज्ञादि कर्म फलेन त्वदवाप्तिरिति

ध्वनिः। त्वत्प्राप्तय एव कर्मसु दृढा शुक्तिः। एवं लक्ष्मीनारायणाराधनेनैव लक्ष्मीर्मुक्तिश्च भवति ॥२०

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृतामृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः। क्रतुभ्रंशस्त्वत्तः क्रतुफलविधानव्यसनिनो ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥२१॥

इदानीम्भगवद्भक्तिलेशाभावे उत्तमसामग्रीसहस्रैरपि प्रवर्तिता यज्ञास्स्वस्यैव नाशकरा इति प्रदर्शयन्स्तौति हे शरणद शरणं ददातीति तथा स्वभक्तरक्षाप्रदेत्यर्थः। यदि दक्षो यजमानस्त्वच्छरणागतस्तर्हि कथं तस्य विनाशस्स्यादिति शरणदेत्यस्याभिप्रायः। दक्षो ब्रह्मणः पुत्रः क्रियासु दक्षः प्रवीणस्तथा क्रतूनाम्पतिरनेकयज्ञकर्ता तथा तनुं बिभ्रतीति तनुभृतस्तेषां प्राणिनामधीशः स्वामित्वे नोत्तमलोकमधिष्ठितः तथा ऋषयः सत्यवचसस्त्रिकालदर्शिनश्च तेषामार्त्विज्यं ऋत्विजो भावस्तथा। ब्राह्मणादित्वात्ष्यञ्प्रत्ययः। ऋत्विजो यजुस्सामर्गविदस्तत्र यजुर्वेत्ता अध्वर्युः सामवेत्ता उद्गाता ऋग्वेत्ता होता तेषां भाव आर्त्विज्यं तत्स्वरूपतेत्यर्थः। तथा सुरगणा ब्रह्मा-

क्र्यो देवासुरसदस्याः सदसि साधवो सदस्याः तत्र साधुरितिं यत्प्रत्ययः । ऊनाधिकविचारका ऋत्विग्भेदा विधिदर्शिन उपदेशाचाराः । एवं सकलोत्तमोत्तमसामग्री अपि दक्षयज्ञे तथापि क्रतोः फलविधाने क्रतुफलदाने व्यसनमभ्यासो यस्य तस्मादपि त्वत्तो हेतोः क्रतुभ्रंशो यज्ञनाशो जातः । ईश्वरविमुखस्य रक्षणे कोऽपि न समर्थो इति भावः । हि यतो ध्रुवं निश्चितं श्रद्धाविधुरं भक्तिरहितं यथास्यात्तथा प्रवर्तिताः मखा यज्ञाः कर्तुर्यजमानस्याभिचाराय नाशाय भवन्ति । एवं त्वयि फलदानाशक्तेऽपि विमुखत्वान्नाश एवेति ध्वनिः ।

## ॥ हरिपक्षे ॥

श्रद्धाविधुरत्वं भगवदनुग्रहीतब्रह्मविदां गर्वेण तिरस्करणम् । दक्षो ब्रह्मविदां तिरस्कारं कृतवानिति पुराणेषुप्रसिद्धम् । यथा यदाभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत् । इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च बृहस्पतिसवं नाम समारेभे क्रतूत्तमम् । एवं शिवहेतुकं दक्षविध्वंसनं तव भक्तद्रोहादेव । यद्वा तनुभृतां राक्षसानामधीशो बलिः । यद्वा त्रैलोक्यवासिनामधीशः क्रियासु दक्षः दानादिष्वपि दक्षः प्रवीणः वामनेन सर्वस्वं हृत्वा वरुणपाशेन बद्धः । तथा सुरेषु गण्यंते वीर त्वेन सुरगणा देवोऽभ्योऽप्यधिकबलिनः राक्षसास्सदस्याः तथा ऋषीणामार्त्विज्यं एवम्भूतोऽपि बलिः त्वत्तः क्रतौ भ्रंशो यस्य एवं जातः

क्रतुफलविधानव्यसनिन इत्यनेन यज्ञे भ्रष्टस्यापि क्रतुफलं तु ददासीति ध्वन्यते। अत्र श्रद्धाविधुरत्वं भगवदनुग्रहीतेन्द्रादिलोकपालैस्सह विरुद्धत्वम्। एवं स्वद्रोहं सहमानोपि भक्तद्रोहं न सहत इति ध्वनिः। नन्वेवं शक्रो भक्तो बलिरपि भक्तः कथमिन्द्रस्यैव सहायं कृतम् बलेर्ध्वंसः कृतः तत्राह श्रद्धाविधुरमित्यादि। एवं स्वभक्तपातेऽपि त्वमनुग्रहं न त्यजसे।

## ॥ श्रीरामपक्षे ॥

तनुभृतां त्रैलोक्यवासिनामृषीणां सप्तर्षीणां अधीशःदण्डवाभिस्यत्वेन दण्ड ग्राहको।रावणस्तथा क्रियासु दक्षः युद्धादिष्वपि दक्षः तथा क्रतुपतिः रामचन्द्रयुद्धसमये रामजयार्थं यज्ञमधिष्ठित इत्यर्थः। तथा आर्त्विज्यं विद्यते यस्येति मत्वर्थीयोऽच् स्वयमेवाध्वर्य्यादिरूपता तथा सुरेषु गण्यन्ते बलाधिक्यात्प्रशंस्यन्ते इति सुरगणाः विंशतिबाहवस्सदस्या एवम्भूतोऽपि सर्वेश्वरो; रावणस्त्वत्तस्तत्कृतसीतावियोगजनितक्रोधयुक्तादित्यर्थः। क्रतोर्भ्रंशःक्रतु भ्रंशः तस्य क्रतोर्नाशो जातः। क्रतुसहितो रावणभ्रंशस्तथा शाकपार्थिवत्वान्मध्यमपदलोपी समासः इति वा। श्रद्धाविधुरत्वं रामभार्याहरणरूपत्वम् एवं स्वस्यापि देहद्रोहाद धिकं भार्याहरणं सन्निधानाम्। शेषं शिवपक्षवत्।

## ॥ श्रीकृष्णपक्षे ॥

तनुभृताम्मनुष्याणामधीशो राजा काशिराजपुत्रः क्रतुपतिः श्रीकृष्णमारणाय शिवमाराधयन् अभिचारयज्ञमधिष्ठितः अतिशूराः क्षत्रियाः सदस्याः ऋषीणामार्त्विज्यम् एवम्भूतोपि त्वत्तः परमेश्वरात् क्रतु भ्रंशः त्वन्मारणायाभिचारयज्ञोत्पन्नकृत्यासहितस्य तस्य भ्रंशः । श्रद्धाविधुरत्वं त्वया सह विरुद्धत्वम् । हि अतो मखाः शुभरूपाअपि श्रद्धारहिताः प्रायेणनाशायैव भवन्ति किमीश्वराभिचार यज्ञाः । यद्वा मखास्तेजस्ते कृताः अभिचारयज्ञाः स्वस्यैवनाशाय भवन्ति । शेषं पूर्ववत् । एवं तुभ्यं कृतं स्वस्मिन्नेन फलतीति वयं वशीकरणमंत्रादिना त्वद्वशीकरणाय न समर्थाः ।

## ॥ शिक्षापक्षे ॥

सुकर्माण्यपि भक्तिहीनस्य प्रायोनाशाय भवन्तीति दृष्टान्तेन शिक्षयन्नाह । अततीत्यत् तस्मादतः परमेश्वरात् । अन्यच्छिवपक्षवत् । नित्यकर्माणि त्यक्त्वा परमेश्वरम्भज ।

## ॥ स्त्रीपक्षे ॥

तस्या लावण्यादेराधिक्यं दर्शयति । इन्द्रियनिग्रहे दक्षः क्रतुपतिर्यज्ञकर्ता एवम्भूतोपि अतिलावण्यादिविशिष्टास्वत्तः सकाशात् क्रतुभ्रंशो यस्येति क्रतुफला वशिष्ठादयस्तेषां विधाने वशीकरणे व्यसनं यस्य तस्मात् । लक्ष्मीरूपत्वान्मदुक्तिरयास्

भक्ता विधुरत्वं त्वद्दर्शनाज्जडीभूतकलेवरत्वं न कर्मविस्मृतित्वम् ।
अन्यत्पूर्ववत् ।

प्रजानाथं नाथप्रसभमभिकं स्वां
दुहितरं गतं रोहिद्भूतां रिरमयिषु मृष्य-
स्य वपुषा । धनुः पाणेर्यातं दिवमपि
सपत्राकृतममुं त्रसन्तन्तेऽद्यापि त्यजति
न मृगव्याधरभसः ॥२२॥

इदानीं ब्रह्मणि सृष्टिकर्तरि दंडप्रदर्शनेनोल्लंघितमर्यादि-कानां नियंतृत्त्वं सर्वेश्वरत्वं च प्रकटयन्स्तौति प्रजानाथमिति । हे नाथ स्वामिन् सर्वेश्वरब्रह्मनियंतृत्वेन सर्वनाथ इति युक्त एव नाथस्याभिप्रायः । धनुः पिनाकः पाणौ यस्य तस्य तव मृगव्याधरभसः विध्यति ताडयति प्राणिनश्शरैरिति व्याधो हिन्सकः मृगस्य व्याधो मृगव्याधस्तस्येव रभस उत्साह समूहः अमुं प्रजानाथं प्रजानांस्थावर जंगमानां स्वामिनम्ब्रह्माणं दिवं याम्प्राप्तमपि अद्यापि न त्यजति । मृगशिरोनक्षत्ररूपं समार्द्रा-रूपेणशरेण संधितमित्यर्थः । किम्भूतम् सपत्राकृतं पत्रेण सह वर्तते इति सपत्रं तत्कृतमिति सपत्राकृतम् सपुंखशरप्रवेशनेन सपत्रं कृतं शल्यास्मतिव्यथां नीतमित्यर्थः पत्रं वाहनपक्षयोरि-

ति विश्वः सपत्रनिष्पत्रादतिव्यथने इति डच् प्रत्ययः। अत एव त्रसंतं अतिभयमुपगच्छन्तम्। पुनः रोहिद्भूतां कामेन मैथुनाय प्रवृत्तं ब्रह्माणं दृष्ट्वा तद्वच्च नायस्तलज्जया मृगीभूतामपि स्वां दुहितरं कन्याम् ऋष्यस्य मृगस्य वपुषा शरीरेण प्रसभं हठात् रिरमयिषुम् पुनरपि क्रीडितुमिच्छुमित्यर्थः। रन्तुमेषयतीति प्रैषेणिच् तत इच्छार्थे सन् रिरमयिषति इति रिरमयिषुः। ऋष्यो मृगविशेषः अर्षतीति ऋष्यम्। अभि काममते अभिकं कामुकम्।

## ॥ हरिपक्षे ॥

धनुः पाणेर्विष्णोस्तव मृगव्याधरभसः मरीच्यादिस्वपुत्रकृतस्तुत्युद्भूत ब्रह्मनिर्लज्जत्वहरणः कश्चित् व्यापारसमूह इत्यर्थः। अमुं प्रजानाथं ब्रह्माणं दिवं स्वर्गं यातमपि अद्यापि न त्यजति सलज्जं ब्रह्माणं निर्लज्जं न करोति। सपत्राकृतमिवेत्युपमालङ्कारः। अत एव त्रसंतं दुहितृगमनादिरूपाशिवकर्मतो भयमुपगच्छन्तम्। पुनः रोहितो हरिण्याभवतीति रोहिद्भूर्मृगीबालको मृगस्तस्य भावस्तत्तां गतं अज्ञानान्मृगतुल्यताम्प्राप्तं। अत एव स्वां दुहितरं कन्यामृष्यस्य वपुषा पशुतुल्य शरीरेण प्रसभं क्रीडायितुमिच्छुम्। इत्येवं कुतः अभिकं कामुकं कामेनाभिभूतम्। ब्रह्मणो दुहितृगमनं पुराणादौ प्रसिद्धम्।

## ॥ श्रीरामपक्षे ॥

हे नाथ धनुर्धारिणामध्ये श्रेष्ठस्य जनकस्य मृगव्याधस्येव तुभ्यं सीतां दानेनोत्साहसमूहः । अमुं गतं विद्यमानं त्वां प्रजानाथं अदस् शब्दो विप्रकृष्टवाची तदुक्तम् इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् । त्वां दिवं स्वर्गतुल्यं सीतया सह भोगं यातं प्राप्तमपि अद्यापि न त्यजति । यद्वा किम्भूतम् दिवम् स्वर्गात्मकम् पुनः यातं मायया मनुष्यत्वम्प्राप्तम् अत एव सपत्राकृतम् । कामबाणव्यथां नीतम् अत एवमिकं सीतां कामयमानम् । पुनः स्वां दुहितरं रोहिद्भूतां नयनाभ्याम्मृगीतुल्यामृष्यस्येहलोकं प्राप्तस्य तव वपुषो शरीरेण रिरमयिषुम् । स्वशब्देन जनको गृह्यते । पुनस्त्वं संतमधर्मात् । यद्वा धनुः पाणौ यस्य तस्य तव मृगव्याधस्येव रभसः जनकेन राज्ञा सीता मह्यं दत्ता इति मनोत्साहव्यापारसमूहः प्रजानाथं जनकं दिवं स्वर्गम् यातमपि न त्यजति अति जनकभक्त्या त्यागं न करोति । [ किम्भूतम् रोहिद्भूतां स्वां दुहितरं सीतामृष्यस्य तव वपुषा रिरमयिषुम् पुनः सपत्राकृतं बाणव्यथां नीतम् अत एव त्रसन्तं भयपीडितत्वात्स्वशरणं गतं स्वशत्रुमपि गतं तद्रक्षणाय प्राप्तम् । अनेन तस्य धर्मात्मकत्वं ध्वन्यते । पुनः अभिकम् अभितः कं सुखं यस्य तम् अनेन तस्य भोगातिशयं ध्वन्यते इत्येवमहो महद्भाग्यम् तस्येति भावः ।

## ॥ श्रीकृष्णपक्षे ॥

धनुः पाणेः कामस्य मृगव्याधस्येव रभस उत्साहसमूहः। अमुं प्रजानाथं प्रजां सन्तानं याचते तं नाथृ नाधृ याचने तद् स्त्रीगणम् स्त्रियः प्रजा एव बहुमन्यमाना इति भावः। दिवं यातमपि गोलोकात्स्वर्गतुल्यम्वृन्दावनं प्राप्तमपि न त्यजसि। लपत्राकृत कामबाणव्यथां नीतं ततस्त्रसंतं कंपायमानं शिथिलमित्यर्थः। पुनः अभूवन्निति भूता रोहितो मृगाः भूता उत्पन्ना यस्यां सा रोहिद्भूता पृथिवी तां गतं धर्मरक्षणायाव-तीर्णम् अस्मभ्योपि विहारदाने धर्म एवेति त्वया विचारणीयम्। यद्वा संसारदुःखनाशायावतीर्णम् एवमस्माकमपि दुःख हरणेन तव पृथक् व्यापार इति भावः। त्वां प्रसभं प्रति स्वां मूर्तिम् रिरमयिषुम्। किम्भूतं त्वाम् अभिकं कामुकं त्वमति स्त्रीगणं कामयमान एव। किम्भूताम् पृथिवीम् दुहितरं त्वया कन्यात्वेन स्थापिताम्। पृथु अवतार इति शेषः। किम्भूतस्य वपुषः देहेन् ऋष्यस्य प्रद्युम्न नाम्ना इहावतीर्णस्य।

## ॥ शिक्षापक्षे ॥

दण्डप्रदर्शनेनतं शिक्षयति। अर्थस्तु शिवपक्षवत् श्रेयः एव-मुल्लंघितमर्यादकानां नियंतृत्वात्त्वमपि दंडं दास्येस्येवेति ध्वनिः। यद्वा प्राणि वधार्थं धनुः पाणौ यस्य तव मृगव्याधस्येव रभस उत्साहसमूहः प्रजां नाथते याचते।देवादिति प्रजानाथं त्वत्पि-तरमाद्यापि न त्यजति त्वद्बाल्यावस्थाया अद्य पर्यन्तं न त्यागं

करोति इत्यपीत्यस्यार्थः । अतएव त्रसंन्तं त्वन्निमित्तभतिभययुक्तम् । किञ्च दिव स्वर्गमपि यातं मृतमपि अमुं न त्यजति किम्भूतम् सपत्राकृतं त्वद्दौष्ट्यबाणपीड़ितम् मर्मस्थलवेधकत्वद्वचनशरपीड़ितमिति वा । पुनस्स्वां दुहितरं रोहिद्भूतां नयनाभ्याम्मृगीतुल्यतां नीताम्ऋष्यस्य मृगतुल्यस्य वपुषा देहेन हठात् रिरमयिषुम् योजयितुमिच्छुम कन्याया विवाहकर्तुमिच्छुम् । एवं पितरि पुत्रनिमित्तकं त्रासं न योग्यमत उग्रतां त्यक्त्वा शान्तो भव विवाहे साहाय्यं कार्यम् ।

॥ स्त्रीपक्षे ॥

धनुः पाणेः कामस्य मृगव्याधस्येव रभसः अमुं प्रजानाथं जनं शिशुपालादिकमद्यापि न त्यजसि त्वद्दर्शनादद्यपर्यन्तमपि न त्यागं करोति । अनेन सार्धं त्वया रमणीयमिति रुक्मिणीम्प्रति हास्यपरक श्रीकृष्णवाक्यम् । किञ्च दिवं यातमपि न त्यजति । अनेन स्वर्योषिद्भ्योऽपि त्वल्लावण्याधिक्यं स्वर्गस्थभोगादपि त्वदगृहभोगातिशयाधिक्यम । अभिकं त्वां कामयमानम् अतएव स्वां मूर्तिम्प्रति दुहितरं कस्यापि महद्भाग्यवत इति शेषः । रोहिद्भूताम्मृगीतुल्याम्मृगाक्षीं त्वां वपुषां रिरमयिषुम् किम्भूतस्य धनुः पाणेः ऋष्यस्य देहाधिष्ठानकर्तुरित्यर्थः ।२२॥

स्वलावण्याशंसाधृतधनुषमन्हाय
तृणवत्, पुरप्लुष्टं दृष्ट्वा पुरमथन पुष्पा-

युधमपि । यदि स्त्रैणं देवी यमनिरत देहार्द्धघटना,दवैति त्वामद्धावत बरद मुग्धा युवतयः ॥२३॥

इदानीम्पार्वत्यास्सौन्दर्यातिशयेन ममाधीनोऽयं शिव इति गर्वोत्साहो व्यर्थ एवेति प्रदर्शयन्स्तौति स्वलावण्येति । हे पुरमथन अतिवीरत्वात्त्वयि कामस्पर्शोपि नास्ति । हे यमनिरत जितेन्द्रिय स्वस्याः पार्वत्या लावण्यं सौन्दर्यातिशयस्तस्य आशंसा आशंस्यतेऽनयेत्याशंसा शंसु प्रकथने करणेघञ् ॥ पार्वती लावण्यातिशयेन शिवं जेष्यामीति प्रत्याशा तया धृतं हस्ते गृहीत्वासज्जीकृतं धनुर्येन तं पुष्पायुधं कामं तृणवत् तृणाग्निमिव अन्हायेत्यव्ययम् शीघ्रार्थे वर्तते शीघ्रं त्वया प्लुष्टम्भस्मीकृतम् । प्लुषु दाहे क्त प्रत्ययः । पुरस्तात्तादृष्ट्वापि देवी पार्वती यदि त्वां स्त्रैणं स्त्रीषु आशक्तं तथा देहार्द्धघटना-देहस्यार्द्धो देहार्द्धस्तस्मिन् घटना स्थापना घट्यते इति घटना तस्माद्धेतोरवैति जानाति इत्यद्धाव्यर्थमेवा त्वयिस्त्रैणत्वकल्पना स्मिथ्याज्ञानमेव । तदेवाह हे वरद भक्तवात्सल्येनैव चिरं तपस्यतीम्पार्वतीमद्धांगीं कृतवानिति वरदस्याभिप्रायः । बतेति खेदे युवतयः षोड़शवर्षोपरि त्रिंशद्वर्षपर्यन्ता युवतयो मुग्धा अज्ञानस्वभावा इत्यर्थः ।

---

## ॥ हरिपक्षे ॥

यमेन निरता ब्रह्मादीनां देहा यस्यां सा देवी लक्ष्मीः किञ्चिदपाङ्गेनास्मान्पश्यतु इति जितेन्द्रियास्ततस्तपोनिष्ठिता इति भावः । किम्भूतम् कामं स्वस्य लावण्यं यस्य तस्य आशंसः कथनं येन तादृशमाधृतं धनुर्येन तम् पुनः पुष्पायुधम् पुष्पायुधबलेनैव तस्य त्रिलोक्या जय इत्यर्थः । अर्द्धघटनात् पातिव्रत्येन देहार्द्धे स्थापनात् पतिव्रतानां स्वस्य देहस्यर्द्धभाग इति सर्वत्र प्रसिद्धम् । अन्यत्पूर्ववत् । एवं यद्भक्त्या शिवः कामं जिग्ये तस्मिन्सर्वेश्वरे परमात्मनि कामस्य स्पर्शोऽपि नास्तीति भावः । त्वं तु विश्वरक्षणाय यदा सत्वगुणं समाश्रितस्तदैव स्वाधीनां शक्तिं गृह्णासीति ध्वनिः ।

## ॥ श्रीरामपक्षे ॥

हे देहार्द्धघटनात् रामचन्द्र देहार्द्धो घट्यते चेष्ट्यते अनेनेति देहार्द्धघटनो ब्रह्मा देहार्द्धचेष्टनं तु मनुस्मृतौ कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत यस्तु तत्र पुमान् सो भून्मनुस्स्वायंभुवः स्वराट्स्त्री यासाच्छतरूपाख्या महिष्यस्य महात्मनः तदा मिथुनधर्मेण प्रजा ह्येषां बभूविरे इति तस्मै अतति प्राप्नोति मनुष्यलोकमिति देहार्द्धघटनात् ब्रह्मयाचनादेव स्वभवतीर्ण इति भावः । तवावतीर्णस्य वने सीताविरहेण

षाङ्क्व्यदर्शनेन जातभ्रान्तिः देवी सती त्वां स्त्रैणं स्त्रियाधीनं यद्ययं सीताधीनो न तर्हि कथमीदृशं वैक्लव्यमप्राप्नुयादिति अवैति भ्रान्त्या जानाति तद्भ्रममेवेत्यर्थः । एवं यस्याग्रे स्थातुं माया चिलज्जते यस्येक्षणेनेदं विश्वं घटयतीत्यादिस्मृत्यर्थेन. शक्तिस्तवाधीनेति भावः । शेषं समानम् । यद्भक्त्या शिव कामं जिग्ये तस्मिन्सर्वेश्वरे परमात्मनि कामस्य स्पर्शोपि नास्तीत्यपि शब्दस्यार्थः यद्वा अकारो विष्णुस्तस्मिन् रामचन्द्रे निरतो देहो यस्याःसा पतिव्रता इयं देवी सीता पुरं लंकापुरं प्लुष्टम् भस्मीभूतम् पुरः अग्रे दृष्ट्वापि यदि स्त्रैणं नावैति न जानति तद्युक्तमेव । मदर्थमेव धनुर्धारणेन लंकादहनेन प्रवृत्तोयं रामो मदधीन इति भ्रान्त्यभावात् ननु कुत इयं तादृक् ज्ञानवतीत्यत आह अर्द्धघटनात्तस्य कृपयात्यन्त सामीप्याद्धेतोः किम्भूतम् रामं स्वस्य लावण्य यशोरूपं सौन्दर्यं तस्याशंसा वार्ता तन्निमित्तं धृतं वपुर्येन तम् । मनुष्यावतारचरित्र करणाय तव धनुर्धारित्वमित्यर्थः । पुनः पुष्पायुधम् पुष्पवत् कोमलानि लग्नानि भवन्ति आयुधानि यस्मिन् शत्रूणामिति शेषः । युवतयः सामान्या स्त्रियोऽज्ञान स्वभावा भवन्ति इयं तु तच्छक्तिरेवं प्रपञ्चाधिष्ठात्री । वस्तुतस्तु सीतयैवेदं सर्वं कृतमिति नस्यकृतेनस्यस्य भ्रांति तदुक्तमध्यात्मरामायणे मां विद्धि मूलां प्रकृतिं सर्गस्थित्यन्तकारिणीम् अयोध्या नगरे जन्म रघुवंशेऽति

निर्मले विश्वामित्र सहायत्वं मखसंरक्षणंयतः । एवमादीनि कर्माणि मयैवाचरितानि हि आरोपयन्ति रामेस्मिन्निर्विका-रेखिलात्मनि ।

## ॥ श्रीकृष्णपक्षे ॥

इयं देवी रुक्मिणीत्युपलक्षणमन्यासाम् पुरः अग्रे तृणमिव दग्धमिदानीं त्वय्यवतीर्णे कामं दृष्ट्वापि त्वां स्त्रैणमयैति कथयति तदद्धा सत्यमेव । इदानीं दग्धदेहः कामः कृष्णावतारे अंगवान् भविष्यतीति रतिम्प्रति शिवेनोक्तमिति पूर्ववार्तया परमेश्वरा-वतारोयं न कस्याप्याधीन इति सर्वेश्वरं श्रीकृष्णं त्वां जानत्य-पीत्यपि शब्दस्यार्थः । अर्धघटनात् अर्द्धाङ्गे स्त्रीणां स्थापनात् । इति कस्याश्चिद्धास्यरसोक्तिः । स्वस्य लावण्यं सौन्दर्यं तस्या-शंसा कथनं तन्निमित्तं धृतं धनुर्येन तम् । योषितांमनोव्यापार-कर्षणार्थं त्वं धनुर्बिभ्रसीति भावः । यथा सजलोजलदस्स्वयं दर्शनीय एव विद्युद्भिरिन्द्रधनुषा च लक्षितः किमु वक्तव्य मेवं त्वमपि इति प्रोषितभर्तृकोक्तिः । हे वरद इत्यनेन स्वाभिप्रायं द्योतयति मुग्धाः स्त्रिय इति यद्भवान् जानीयात्तत्तु नेत्याह युव-तयो मुग्धा अज्ञाना न भवन्ति । अतस्तवाभिप्रायं वय जानीम एवेति भावः । यद्वा इयं देवी अर्द्धं घटनादति सामीप्याद्धेतो-स्त्वां स्त्रैणं न कल्पयति तदद्धा सत्यमेव किं कृत्वा त्वय्यवतीर्णे कामं पुरं काशीपुरं दग्धाश्च दृष्ट्वा त्वय्यवतीर्णेकामदर्शनेन

दग्धकाशीपुरदर्शनेन च परमेश्वरोयं लोकशिक्षणायैवेदृक् कर्म करोतीति तत्त्वज्ञानवतीत्यर्थः। शेषं रामपक्षवत्।

## ॥ शिक्षापक्षे ॥

न निरतः अन्येषु पुरुषेषु देहो यस्याः सा निरत देहा इयं देवी दिव्य स्वरूपा तव भार्या। पुरोग्रे पुष्पायुधम् कामं अन्धाय शीघ्रं तृणमिवशिवेन दग्धम् दृष्ट्वा श्रुत्वापि यदि त्वां स्त्रैणं स्त्रीसक्तमर्द्धाङ्गे स्थापनाद्धेतोर वैति कथयति तदश्चा सत्यमेव किम्भूतम् कामम् अपुरम् न पुरापूर्वं कश्चित्पुरुषो यस्मात्स्त्य-पुरम् यतः अजेयः कोऽपिनेत्यर्थः। शेषं कृष्णपक्षवत्।

## ॥ स्त्रीपक्षे ॥

हे ईयम ईः कामस्तं यमयति वेष्टयति स्व लावण्यादिना इतीयम स्त्रीजन यमपरिवेषणे धातुः परिवेषणमिह वेष्टनम्। निरतः अन्येषु शिशुपालादिषु देहो यस्यास्सा देवी दिव्यरूपा भवतो रुक्मिणी त्वं तु अन्येषु सक्ता इत्यर्थः अहन्तु न स्त्रीसक्त इत्यत आह स्वस्मिन् रममाणत्वात्पुष्पायुध कामं मामपि स्त्रैणमर्द्धदेहे स्थापनादवैति। असा व्यर्थमेव। अहं तु त्वय्येवा-सक्तो न त्वन्यासु। कामं पुरः पुष्टं दग्धं इदानीमवर्णमित्यर्थः। किम्भूतम् माम् स्वलावण्याशंसा स्वयशोरक्षार्थं धृतमन्यनिवार णाय धनुर्येन तम्। त्वहलावण्यादिना देवाङ्गना अपि मोहिते-त्यत आह त्वां दृष्ट्वा युवतयस्त्रैलोक्यवासिन्यस्सर्वा अपि

मुग्धास्त्यक्तगर्वा भवन्ति । धृत धनुरित्यनेन वीरत्वं लक्ष्यते इति हास्यपरम् ॥२३॥

**श्मशानेष्वाक्रीड़ा स्मरहर पिशाचाः सहचरा,श्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः । अमंगल्यं शीलं तव भवतु नामैवमखिलं, तथापि स्मर्तॄणा-न्वरद परमं मङ्गलमसि ॥२४॥**

इदानीं स्वच्चित्तकानां तव नाम कल्याणमेव शीलं तु अकल्याणप्रतिभासमात्रमिति सर्वतो वैचित्र्यम्प्रदर्शयन्स्तौति श्मशानेति । हे स्मरहर कामदाहक वरद काम इति क्रोध लोभादीनामुपलक्षणम् तथा कामादीनां नाशकत्वेन सर्वदुःखहारकत्वं वरदेत्यनेन चिन्तकानां भक्तानां श्रेयः प्राप्तिकर्तृत्वञ्च व्यज्यते । एवं प्रकारेण तव न खिलं शून्यमित्यखिलं सर्वमाचरणममंगल्यं मङ्गलरहितम् । अमंगलदर्शनेन दुष्टानामनर्थप्राप्तिकारक मित्यर्थः भवतु नाम प्रतिभासमात्रम् । तथापि त्वं तु स्मर्तॄणां स्वच्चित्तकाना परं सर्वोत्कृष्टं मङ्गलं कल्याणमेवासि कल्याणकामैस्सर्वैस्त्वं सेव्योसि । एवं च तव शीलं दुष्टानाममंगल मेव भक्तानां तु अमङ्गलप्रतिभासमात्रं कल्याणदायकं । यः स्मरणमात्रेणेव मङ्गलदाता तस्य शीलममङ्गलकारकं कथं स्यात् । तथा च तव शीलं विडम्बनमेवेति भावः तदुक्तम्भागवते

ब्रह्मादयो यत्क्रमसेतुपाला यत्कारणं विश्वमिदञ्च माया आज्ञा करी तस्य पिशाचचर्या अहो त्रिपुरनश्चरितं विडंबनम्। अमंगल्यमेवाह श्मशानेषु चिताभूमिषु आ समंताद्भावेन क्रीडा। तथा पिशाचास्सहचरास्सहगामिनः। चिताभस्म न आलेपो लेपनम्। नृणां करोटी कपाल तस्य परिकरस्समूहः स्रक् माला।

## ॥ हरिपक्षे ॥

हे स्मरहर स्मरं हरति नतु स्खलयति कामजयीत्यर्थः। सव अखिलं शीलं मत्स्यादिना क्रीड़नादि अमंगल्यं भवतु नाम तवैवामंगल्यं भवतु नत्वन्येषाम्। अन्येषां तु तवाचरणं मुक्तिदायकमेव। तथापि त्व तु स्मर्तॄणां पर मङ्गलमसि ये त्वच्चित्तकास्ते सर्वे मुक्तिभागिनः। शीलमेवाह। श्मशानेषु मरणप्रधानेषु मत्स्यशूकरादि देहेषु आक्रीड़ा स्मरहरस्य शिवस्य पिशाचा इव सहचराः यथा पिशाचा निन्द्यास्तथा स्वजातीया अपि। चिताभस्म इव निन्द्य आलमनाद्भावेन पङ्कलेपः। नृणां करोटी कपालं तस्य परिकरः समूहो यस्य स राक्षससमूहस्रग् मालां इवानुलक्षणमद्यापम् हन्तव्यः पश्चादयमय कृग-मयङ्केन प्रकारेण महाबलोति चिन्तनयोग्यमित्यर्थः। एवं तवाघटितघटनापटीयस्या माययैव कार्यकरणायावतारात्वस्मदादिवत्कर्मवशेन। तथा च तवाचरणं मङ्गलमेवेति भावः।

## ॥ श्रीरामपक्षे ॥

तव नाम न खिलं शून्यमित्यखिलं सफलमस्ति । शीलं राक्षसमारणादि अमंगल्यं भवतु तेषामेवेत्यर्थः । त्वं तु स्मर्तॄणां परमं मंगलमसि वस्तुतस्तु तव शीलं नामंगल्यं तेषामपि ये त्वया क्रोधेन संख्ये हता अपि तेपि त्वत्पुरं यान्तीति कथं तेषाममंगल्यम् तदुक्तम् ये ये हताश्चक्रधरेण राजन् त्रैलोक्यनाथेन जनार्दनेन ते ते गता विष्णुपुरं नरेन्द्र क्रोधोऽपि तेऽनुग्रह एव सम्मतः इत्यादि । शीलमेवाह श्मशानेषु मृतादिप्रधानेषु संग्रामेषु आक्रीडा राक्षसमारणादि क्रीडैव । पिशाचास्ते इव सहचरा ऋक्षवानराः अतिक्रूरचञ्चला इत्यर्थः । यद्वा विभीषणादयो राक्षसाः यद्वा पिशाचा एव सहचराः यत्र यत्र युद्धं कर्तुं गच्छति तत्र तत्र मांसाहाराय ते सहैव गच्छन्ति । किम्भूतास्ते चिताः एकीकृताः चिञ् चयने क्तः । तथा भस्मालेपः भस्मना इव आलेपः यथा भस्मना लेपनं चंदनादि लेपो तथा रुधिरौघेण युद्धोत्थितधूलिभिर्वापि । यद्वा शिवोपासकत्वाद्भस्मन एवालेपः । तथा नृकपालसमूहस्रक् मालेव अनुत्तमं दर्शनयोग्यम् । एवं लोकोपकाराय त्वमवतीर्ण इति भावः ।

## ॥ श्रीकृष्णपक्षे ॥

हे कृष्ण तव नाम अखिलं सफलं फलत्वावच्छिन्नं मुक्तिदायकं न तु खिलं शून्यं स्वर्गादि तद्दायकमेव । नाम इत्येकवच-

नेन प्रकमीर नाम्ना मुक्तिदायकमपरं तु न ज्ञातं किं दास्यतीति ध्वनिः॥ यथा कृष्ण: कृष्णः कृष्ण इत्यन्तकाले जल्पन् जन्तु-र्जीवितं यो जहाति आद्यश्शब्दः कल्पते तस्य मुक्तये क्रीडा-न्तनौ तिष्ठतोऽन्यावृणस्थौ। एवं भाम शीलं परस्त्रीरमणादि अमङ्गल्यं भवतु ईश्वराज्ञानवताम् त्वं तुस्मर्तॄणां परं मंगल-मसि। अज्ञानिनामेवामंगल्यं न ज्ञानवताम्। यद्वा तव शीलं कपटादि अमंगल्यं भवतु अस्माकं किम्। त्वं तु त्वस्माक-मङ्गलमेवासि विहारदानेन सुखप्रदातासि। स्मर्तॄणां अनु-स्मरणं त्वद्ध्यानाविरतानाम्। यद्वा शीलं गृहेषु क्रीडनादि। श्मशानेषु अशुचिस्वभावेषु परस्त्रीदेहेषु आक्रीडा शून्येषु कपटादिषु किंवा मृतकप्रधानेषु गृहेषु आक्रीडा। विहारे मुक्तकेश्यः स्त्रियः पिशाचा इव सहचराः परदुःखदायकस्व-भावा कपटादि गुणा इति च पिशाचा इव पुत्र कलत्रादय इत्यपि तथा भस्मनालेपो व्यर्थः स्त्रीक्रीडनादिनापि यथा कपटेन लेपिन भस्म व्यर्थं तथा तव चन्दनाद्यपि। यद्वा भस्म इव आलेपश्चन्दनादि निस्सार इव। भस्मालेपः यथा भस्मनि लेपः चन्दनादिलेपो व्यर्थस्तथा विण्मूत्र पूर्णे देहेऽपीत्यपि। तथा नृणां करोटी कपालं तत्परिकरस्सामग्री यस्मिन् सः स्त्री-जनानां देहस्सक् मालेवानुसरण चिन्तनयोग्य इत्यर्थः। स मालेव तेन सर्वतो वृत इत्यपि। यद्वा स मालेव यांपिच्छासु-ख्यातालि ङ्कृतकंठः। नृकरोटीपरिकरस्सामग्री यस्य स राक्षस-

समूहस्स्रगमालेव तैर्हननायानुक्षणं सर्वतो वृतः । राक्षसहनना-यानुक्षणं चिन्तकः इति च या छा शिरः प्रभृति देहो मित्रपुत्रक-लत्रादीनां सः स्रग्मालेवानुक्षणं ध्यानयोग्यः ।

## ॥ शिक्षापक्षे ॥

एवं प्रकारेण तव नाम अखिलं सार्थकं गुणानुसारी । एवं किममशीलमनर्थकरमिति चेत्तत्राह । तव शीलं स्वभावः मङ्ग-लमस्तु तवैव अन्येषात्वमंगलमेव । स्मर्तॄणां तु त्वममङ्गल-मेवासि । एवं यस्य शीलममंगल्यं तस्य नामापीति भावः । शीलमाह श्मशानेषु अशुचिस्वभावेषु वेश्यादिगृहेषु क्रीड़ा ताभिस्सह विहारः । तथा स्मरं स्मरणं शास्त्रीयज्ञानं तद्धरति नाशयतीति तथा । पिशाचास्ते इव सहचरा मित्राः तथा । चिताभस्मनि सिक्त आलेपो व्यर्थस्तव देहेपीति अशुचित्वात् । तथा नृकरोटीपरिकर शिरप्रभृतिदेहो पोषिजजनानां सः स्रक् मालेवानुक्षणं चिन्तनीय इत्यर्थः । एवं त्वया स्वभावस्त्याज्य इति भावः ।

## ॥ स्त्रीपक्षे ॥

राधादीन् प्रति कृष्णवाक्यम् । हे स्मरहर स्त्रीजन स्मरं हरति उत्पादयति स्वदर्शने इति सम्बोधनार्थः । एवंप्रकारेण-तवाखिलं सफलं शीलं हास्यादिना मोहकत्वं अमङ्गल्यं नाम भवतु रसज्ञानत्वावच्छिन्नज्ञानविरतानाम् । त्वं तु रसज्ञान-वतामपि परं सर्वोत्कृष्टं कल्याणमेवासि । त्वद्दर्शनेन सर्वाणि

कार्याणि सफलानि भवन्ति । एवं ज्ञात्वा ममापि त्वयिप्रवृत्ति रिति ध्वनिः । शीलमाह श्मशानेषु काव्य शास्त्र रस विनोदा-भावशून्येषु गोपगृहेषु विहारः । पिशाचा इव सहचराः यथा पिशाचा मोहकारकास्तथा काव्यशास्त्ररसविनोदमूढाना तत्र लावण्यादि गुणा अपि किम्भूताः चिता ब्रह्मणात्वय्येकत्रो-कृताः । तथा भस्मालेपः तथा देहे भस्म अतिपुण्यपुञ्जकार्या-यालिख्यते तथा त्वद्देहे आलेपोपि । तथा स्रक् माला । नृकरोटी कपालं तस्मिन्परिकरः मुकादिरचना विशेषः एवम्भूता त्वं लब्धेति महद्भाग्यम् ॥२४॥

मनः प्रत्यक् चित्ते सविधमवधायात्त-मरुतः, प्रहृष्यद्रोमाणः प्रमदसलिलोत्सं-गितदृशः । यदालोक्याल्हादं ह्रद इव निमज्ज्यामृतमये, दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान् ॥२५॥

एवं द्वितीया श्लोकादारभ्य सगुणं भक्तपरमाल्हादकारकं मनोविषयं भूतमुपास्यमिति निरूप्येदानी मेकमेवाद्वितीय ब्रह्म नेह नानास्ति किञ्चन सर्वमात्मैवाभूत्तत्केन कम्पश्येत इन्द्रो मायाभिः पुरुरूप ईयत इत्यानन्दमयं ब्रह्म इत्यादिश्रुति-

बोधिताद्वितीयपरमानन्दरूपे, शमदमादिसम्पन्नानि तामनुभवं प्रत्यक्षं प्रमाणं प्रदर्शयन्सत्यं ज्ञानमनन्तमानन्दम्ब्रह्मेत्यादिश्रुति-बोधितो भवानेवेति वदन्तस्याद्वितीयत्वं साधयन् पुनः मनः प्रत्यगित्यादिश्लोकत्रयेण स्तौति । हे वरदेति पूर्वतोऽनुषज्यते-अद्वितीयपरमानन्दे विशेषणसंसर्गाभावात्सम्बोधनाभावः । यमिनः शमदमादिसम्पन्नाः यम इति शमादीनामुपलक्षणम् । यमाः विद्यन्ते येषां ते यमिनः अत इनि ठनौ । यमाश्च अहिंसा सत्यमस्तेय असंगो ह्रीरसंचयः आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमा भयम् । यत्किञ्चिद्वस्तु तत्वं । परोक्षं वेदा-न्तादिवेद्यं आलोक्य. वेदान्तादेरपरोक्षीकृत्य अन्तः आल्हादं ग्राम्यसुखविलक्षणत्वावच्छिन्नसर्वानर्थनिवृत्ति सर्वोत्कृष्टं सुखं दधति धारयन्ति तत्तत्वं भवान् किलेति प्रसिद्धौ । दृष्टान्तमाह अमृतमये अमृतप्रधाने प्राचुर्ये मयट् ह्रदे निमज्य इव अगाध-तीयो जलाशयो ह्रदः इति दृष्टान्तमात्रं न तु दृष्टान्तदार्ष्टान्तिक-योस्साम्यत्वं । तस्मिन् मनः स्पर्शाभावात्सर्वाङ्गसंयोगे तु ततोऽधिकपरमाल्हादि इति भावः । किं कृत्वाप्रत्यक् प्रवणं मनाश्चित्ते हृदयाम्बुजेऽवधाय कामस्संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति श्रुतेः कामादीनां मनोवृत्तित्वं ताभिश्शून्यं कृत्वेत्यर्थः । अत्र धी शब्देन वृत्तिरूप ज्ञानमभिधीयते । अयम्भावः ; अन्तःकरणमेकमपि वृत्तिभेदेन चतुर्धाभिद्यते मनोबुद्धिरहङ्कारःचित्तमिति तदुक्तम् मनो बुद्धि-

रहङ्कारश्चित्तं करणान्तरम् संशयो निश्चयो गर्वः स्मरणं च विषया इमे। अत्र यथाक्रमेण मनआदीनां विषया ज्ञेयाः तथा च स्मरणात्मकं चित्तं इत्यलम्बहुना। किम्भूता यमिनः विधेन सह वर्तन्ते सविधं सप्रकारं यथास्यात्तथा आत्ताः प्राणायामैः स्ववशीकृता मरुतः प्राणवायवो यैस्ते। पुनः प्रहृष्यन्तो रोमाणि येषां ते आनन्दरूपे ब्रह्मावगाहने परमानन्देन पुलकितदेहा इत्यर्थः। पुनः प्रमदसलिलोत्संगितदृशः प्रमदो हर्षस्तस्मा-द्धेतोरुद्भूतं यत्सलिलमानन्दाश्रवस्तैरुत्संगिताः पूर्णा दृशो येषां ते तथा।

## ॥ हरिपक्षेऽध्ययम श्रीरामपक्षे ॥

हे ईश यमिनः यद् ब्रह्म परमं तद्राम एवेति श्रुतिस्मृत्यादि-भिर्निश्चित्य तत्र मूर्तिमन्तः धारयन्ति आत्मनैकीकृत्य ध्यायन्ति तत्त्वं भवान् किलेति प्रसिद्धम्। ब्रह्मण उपासनाभेदेन सगुणं निर्गुणं चेति द्वयं रूपं भास्करभाष्यादौ प्रसिद्धम्। अमृतमये ह्रदे निमज्य इव आत्मनैकीकरणेन परमानन्दस्वरूपा भवन्ति। इहामृतमयनिमज्जने परमाल्हादस्तथा तव मूर्तिध्यानेन परमा-नन्दस्वरूपा भवन्तीति दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्याभ तत्रोप-मेति ध्वनिः। यद्वा अमृतमये मोक्षस्वरूपे ह्रदे अगाधानन्द-रूपे ब्रह्मणि त्वद्द्वितीयस्वरूपे यथा निमज्य तद्रूपा भवन्ति तथात्रापि। किं कृत्वा प्रहृष्यद्रोमाण इत्यादिना ब्रह्मानन्दादपि अस्याधिक्यं ध्वन्यते। तत्र तु आनन्दस्वरूपा एवात्र तु

आनन्दब्रह्ममिति विवेकः शेषं समानम् । इति सगुणोपासना बोद्धव्या ।

## ॥ श्रीकृष्णपक्षे ॥

यमिनः यदन्तः आह्लादं दधति तत्तत्वं भवानेवावतीर्णः । वयमपि जनीमः किलेति प्रसिद्धम् । एवमस्माकं त्वया सह क्रीडनेन महद्भाग्यम् इति स्वकीयोक्तिः । शेषं पूर्ववत् ।

## ॥ शिक्षापक्षे ॥

यद् यमिनोऽन्तः दधति तत्तत्वं त्वं किल मनोभ्यासेन स्वहृदि क्रीडय रमयस्व । किल शब्दैत्यक्रीडनयो धातुः किम्भूतं स्त्वं भवान् भवतीति भवस्संसारः भू धातुः पश्चाद्यच अनितीति अन् अनप्राणने क्विप्तस्माद्भवान् विश्वजीवनभि-त्यर्थस्तदपि तस्यैव शक्तिरिति ध्वनिः ।

## ॥ स्त्रीपक्षे ॥

यमिनोऽपि यत्तत्वमालोकय काव्यशास्त्रादपरोक्षीकृत्यान्तः आह्लादं दधति तत्तत्वं किम् इत्यपेक्षायामाह । किल प्रसिद्धम् भवान् स्त्रीजन । किं कृत्वा मनाश्चित्ते अवधाय सन्देहशून्य कृत्वा । आत्तमकतो यत्प्राणाः । शेषं पूर्ववत् ॥२५॥

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह, स्त्वमापस्त्वं व्योम त्वमु धरणि-

शात्मा त्वमिति च। परिच्छिन्नामेवं त्वयि परिणता विभ्रतु गिरं, न विद्मस्त-त्तत्वं वयमिह हि यत्त्वं न भवासि ॥२६॥

इदानी मेकमेवाद्वितीयम्ब्रह्मेत्यादिश्रुति बोधितम द्वितीयत्वं-वस्य न्यायेनापि साधयन्स्तौति। त्वमर्क इति। परिणताः परिणामं प्राप्ताः परिपक्वबुद्धय एवम्प्रकारेण त्वयि विषये परि-मिताम् परिमितत्त्वावच्छिन्नां गिरं वाणीम्विभ्रतु धारयन्तु। कथं परिमिता मित्याह त्वमर्क इत्यादि। उ शब्दोऽवधारणे। त्वम् अर्कः सूर्यः सोमः चन्द्रमा पवनः वायुः हुतवहः अग्निः आपः जलम् व्योम आकाशम् धरणिः पृथिवी आत्मा जीवः असि। तथा च श्रुतिः इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्य स्सुपर्णो गरुत्मान् एकं सद्विप्रा बहुधा वदन्ति तदेवाग्निस्तदा दित्यस्तद्वायुस्तदु चन्द्रमा इत्यादि। विभ्रतु शब्देनोपहासवचनं ध्वनितम्। हियतः इह जगति तत्तत्वं वस्तु वयं न विद्मो न जानीमो यद्वस्तुत्वं न भवसि। एवं च तव सर्वात्मकत्वं सिद्धम्, तदुक्तम्। सर्वं खल्विदम्ब्रह्म आत्मैवेदं सर्वं। ननु एवं सर्वस्य जगतो ब्रह्मत्वात् घटादीनाम्मिथ्यात्वबाध उपपद्यते तथा च सर्वस्यैक्यवस्तुत्वान्न स पुनरावर्तते यथेह कर्मचितो लोकः क्षीयते एवामुत्र पुण्यचितो लोकः क्षीयते देहात्मत्मत्वयो

यद्वत्प्रमाणत्वेन कल्पितः लौकिकं तद्वदेवेदं प्रमाणं स्वात्म निश्चयाद् इत्यादि शतशः श्रुतिस्मृति उपलब्धः स्यात् । उच्यते अत्र मतद्वयं द्वैतम द्वैतं च । आद्ये घटादीनाम्मिथ्यात्वस्य वाधितत्वं विवादीतम् यत्र हि द्वैतमिति भवति तदितर इतरं पश्यतीति श्रुतेः । अन्त्ये घटादीनाम्मिथ्यात्वस्यावाधितत्वम यत्र त्वस्य सर्वमात्मवाभूत्तत्केन करूपश्येत् । ननु घटादीनाम्मि-थ्यात्वे सर्वं खल्विदंम्ब्रह्म आत्मैवेदं सर्वं प्रभृतयः श्रुतयः कथं संगच्छन्ते । श्रूयताम् खल्विति निश्चयम् ब्रह्मैव सत्यं तद्भिन्न-मिदं सर्वं जगदसत्यम् । आत्मैव सत्यं तद्भिन्नमिदं सर्वं जगद् सत्यमयमभिप्रायः । अन्यथा चैतन्या चैतन्ययोरैक्यत्वे घटादि ज्ञानस्यापि मोक्ष हेतुत्वप्रसंगस्स्यात् । नन्वेवमपि अन्यानुपरक्त चैतन्यज्ञानस्यैव मोक्ष हेतुत्वं नाविद्यापरि कल्पितान्योपरक्त चैतन्य भानस्येति वाच्यम् चैतन्या चैतन्ययोरैक्यत्वमेव न विरोधात् इत्यल पल्लावतन । एवं च स्वत्लच्चायुक्तं सर्व मिति भावः । त्वद्भिभूतयोऽनंत्यत्वाश्च गणनीया ।इत्यर्थकोऽत्रेति शब्दः एवं च तव सर्वात्मकत्वात्त्वमर्क इत्यादि विभूतिगणनं कौशल-मेवेति ध्वन्यते ।

## ॥ हरिपक्षे ॥

सर्वे देवाः समुद्राश्च कालस्सूर्यश्च चन्द्रमाः इन्द्रो देवो दिवा रात्रिर्यमश्चैव तथानिलः । विद्योतति ज्वलत्येष याति

चासीत विश्वकृत् क्रीड़ां करोत्यव्ययात्मा सोयं विष्णुः सनातनः इत्यादि वचनम् प्रमाणम्।

## ॥ रामपक्षे ॥

परिणताः परिणामं प्राप्ता ऐश्वर्यमत्ता इत्यर्थः। त्वयि अपरिच्छिन्ने परिच्छिन्नां परिमितत्वेन मनुष्यत्व प्रतिपादिकां गिरं वाणीं बिभ्रतु वयंतु एवम्प्रकारेण त्वाम्विद्मः केनेत्याह त्वमर्क इत्यादिना। हि यतः तत्तत्त्वं न यत् त्वं न भवसि। त्वद्भिन्नं सर्वमसत्।

## ॥ कृष्णपक्षे ॥

परिणतास्त्वत्सौन्दर्यगर्विताः त्वयि परिच्छिन्नां धूर्तादिगुणयुक्तोयमिति परिमितत्वेन त्वत्प्रतिपादिकां गिरं बिभ्रतु। वयं तु त्वमर्कस्त्वं सोम इत्यादि प्रकारेण जानीमः। अस्माकं त्वमर्कः अस्मद्बुद्धिप्रकाशकः सोमस्सोरत संलापेन परमाल्हादकारकः पवनः स्पर्शेन सुखदायकः यथा शीतलमन्द सुगन्ध युक्तो वायुः स्पर्शेन सुखं ददाति तथा त्वमपि। अग्निः शीतकाले सुखं ददाति तथा कंठलग्नस्त्वमपि। यथा जलं तोदणमं तप्तस्य सुखदायकस्तथा कामसन्तप्तायास्त्वमपि। व्योम आकाशो यथानंतत्वादाकाशस्यान्तं न याति तथा तवगुणानामपि। तथा त्वं धरणिः यथा भूमिस्सर्वं सहते तथास्मदपराधं त्वमपि।

यथात्मा सर्वव्यापकस्तथा सर्वासां सन्निधौ त्वमपि वर्तमानः । नन्वेवं कुत इत्याह हि, यतः इह जगति तत्तत्त्वं न यत् त्वं न भवसि । त्वमेवास्माकं परं तत्त्वं सर्वस्वं त्वद्व्यतिरिक्तं सर्वं शून्यमिति भावः ।

## ॥ शिक्षापक्षे ॥

परिणताः ज्ञानाधिकाः त्वयि परिच्छिन्नां कुमार्गे वर्तमानोऽयमिति परिमितिस्त्वेन वाणीं कथयन्तु । वयन्तु एवं प्रकारेण विद्मः । केनेत्याह त्वमर्क इति त्वमर्कस्स्वपित्रो रिति शेषः तद्गृहप्रकाशकः पुत्रेणैव गृहस्थाश्रमं सफलम्भवति पुम् नाम्नो नरकात्त्राता पुत्र इत्यभिधीयते अपुत्रस्य गतिर्नास्ति दत्तैर्दानैरनेकशः नेत्रहीनो यथा देही गृहो दीपविवर्जितः दिवसो भानुना हीनः पुत्रहीनस्तथा नरः इति स्कन्धपुराणे । तथा त्वं सोमः यथा चन्द्रोऽमृतेन सेचति तथा त्वमपि वाण्या मृतसेचकः । वायुवत्स्पर्शसुखं ददासि पुत्रस्पर्शः परमानन्द कारकः इति प्रसिद्धम् । यद्वा पवनः प्राणः । अग्निः यथा शीतकाले अति सुखदायकस्तथा त्वमपि वस्त्रादिदानेन । आपो जीवनम् । आकाशो यथा शब्दगुणस्तथा शुभत्वावच्छिन्न वाक्गुणस्त्वमपि । त्वं धरणिः यथा सा सर्वं दधाति तथा स्वकुटुम्ब धारकस्त्वम् । आत्मा वै जायते पुत्रः आत्मा वै पुत्र नामासि । इह तत्तत्त्वं न यत्त्वं न भवसि । पुत्र एव परं तत्त्वं । येन केना-

ध्युपायेन पुत्रासौ यत्नवान्भवेत् अन्यथा नरकं याति याव-च्चन्द्रदिवाकरौ अपुत्रस्य गतिर्नास्ति । एवं त्वमर्क इत्यादि यदुक्तं तथैव त्वया भाव्यमिति भावः ।

## ॥ स्त्रीपक्षे ॥

परिखाताः विकृतमतयः त्वयि विषये परिच्छिन्नां गुणपरि-मितत्वेन गिरं बिभ्रतु । वयं त्वेवं जानीमः । त्वमर्क इत्याद्यर्थस्तु कृष्णपक्षवत् । बहुगुणवती त्वमित्याशयः । तत्त्वं न यत्त्वं न अयस्मिं काव्ये त्वामादृत्यैव काव्यशास्त्रम् प्रवर्तते ॥२६॥

**त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपिसुरा, नकाराद्यैर्वर्णैस्त्रिभिरभिद धत्तीर्ण विकृति । तुरीयन्ते धामध्वनि भिरवरुन्धानमणुभिः, समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥२७॥**

इदानीं निगमप्रामाण्येनापि परमानन्दरूपस्य तस्याद्वित-यत्वं साधयन्स्तौति । हे शरणद अद्वितीयस्यैव सर्वाभयप्रदत्वा-च्छरणदेति सम्बोधनम् । ओमिति पदम्प्रथमान्तं । त्रिभिरका-राद्यैरकारोकारमकाराद्यैर्वर्णैरक्षरैः समस्तं तथा व्यस्तं सर्वात्म-कमद्वितीयं त्वां गृणाति कथयति । व्यस्तत्वे हेतुमाह त्रयीत्यादि

अयमर्थः किं कुर्वन् त्रयी ऋग्यजुस्सामेति वेदत्रयं तथा तिस्रो वृत्तीः जाग्रत्स्वप्नसुषुप्त्याख्या बुद्धेर्वृत्तयः बुद्धेर्जागरणं स्वप्न-स्सुषुप्तिरिति चोच्यते इति स्मृतेः । त्रिभुवनं भूर्भुवः स्वरिति लोकत्रयम् अथो इत्यनन्तरार्थकः त्रीन् सुरान् ब्रह्माविष्णुमहेश्वरा ख्यानभिदधन् कथयन् अकारो भूर्लोकः उकारो भुवर्लोकः मकारस्स्वर्लोकः इत्यादि यथासंख्येन । एवमोंकार पदं व्यस्त-त्वेन सर्वात्मकम् तदुक्तम्मार्कण्डेये अलर्कं प्रति मदालसावचनम्। तत्प्राप्तये महापुण्यमोमित्येकाक्षरं जपेत् तदेवाध्ययनं तस्य रूपं च शृण्वतः परम् अकारश्च तथोकारो मकारश्चाक्षरत्रयम् एता एव त्रयो मात्रास्सत्वराजसतामसाः निर्गुणायोगिगम्या-न्या चार्द्धमात्रात्र संस्थिता गान्धारीति च विज्ञेया गान्धार-स्वरसंश्रया पिपीलिकागतिस्पर्शात्प्रयुक्ता मूर्द्धिन लक्ष्यते ओमित्येतःत्रयो वेदास्त्रयो लोकास्त्रयोऽग्नयः विष्णुक्रमास्त्र-यश्चैव ऋग्सामानि यजूंषि च मात्राश्चार्द्धं च तिस्रश्च त्रिज्ञेया परमार्थतः अकारस्त्वत्र भूर्लोक उकारश्चोच्यते भुवः सव्यंजनो माकरश्च स्वर्लोकः समुदाहृतः व्यक्ता तु प्रथमा मात्रा द्वितीया व्यक्ति संज्ञिता मात्रा तृतीया चिच्छक्तिरर्द्धमात्रा परम्पदम् ओमित्युच्चारणात्सर्वं गृहीतं सदसद्भवेत् ह्रस्वा तु प्रथमा मात्रा द्वितीया दीर्घ संयुता तृतीया च प्लुतार्द्धाख्या वचसः सा न

गोचरा इत्येतदक्षरम्ब्रह्म परमोङ्कार संज्ञितम् यस्तु वेदनरः सम्यक् तथा ध्यायति वा पुनः संसारचक्रमुत्सृज्य त्यक्तो विविधबन्धनैः प्राप्नोति ब्रह्मनिलयं परमं परमात्मनि अक्षीण कर्मबन्धस्तु ज्ञात्वा मृत्युमुपस्थितम् उत्क्रान्तिकाले सः स्मृत्य पुनर्योगीत्वमृच्छति तस्मादसिद्धयोगेन सिद्धयोगेन वा पुन ज्ञेयानि परिशिष्टानि येनोत्क्रान्तौ न सीदति समस्तत्वे हेतुमाह तीर्णविकृतिरिति पुनः किं कुर्वन् तीर्णविकृति विकृतिर्विकारम् तीर्णमिति तत्पुरुषसमासे-द्वितीयान्तस्य पूर्वनिपातः । पुनःतुरीयं चतुर्थावस्थापन्नं तादृशं तव धाम स्वरूपं ब्रह्मपदवाच्यम् शिवमद्वैतं चतुर्थं मन्यन्ते इति श्रुतेः अणुभिर्व्यभिभितंद्युत्पन्नैः सूक्ष्मशब्दैरवरुंधानमनवबोधं कुर्वन् । एवं व्यस्तसमस्तत्वेन ब्रह्मपदवाच्यमोङ्कार एव तथाचोपनिषदि ओमित्येतदक्षरमिदं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव यच्चान्य त्त्रिकालातीतं तदप्योङ्कार एव एषस्सर्वेश्वरः अचिन्त्य मव्यक्तरूपं शिवं प्रशान्तममृत ब्रह्मयोनिम् तथादिमध्यान्त-विहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशान्तम् ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षी तमसः परस्तात् स ब्रह्मा स शिवः स हरिस्स इन्द्रस्सोक्षरः परमः स्वराट् स एव विष्णुस्स प्राणस्स कालो-

ग्निस्स चन्द्रमाः स एव सर्वं यद्भूतं यच्च भाव्यं सनातनम् यं ज्ञात्वा मृत्युमत्येति नान्यः पन्था विमुक्तये इत्यलं पल्लवितेन । एवं सर्वात्मक मोङ्कारपदं त्वां गृणाति वाचकत्वेन कथयति । तथाचोङ्कार रूपस्य शिवस्याद्वितीयत्वं सिद्धम् । तव धामेत्यत्र राहोश्शिर इतिवदौपाधिकी षष्ठी अभेदस्तु न सम्बन्ध इत्याहुः ।

## ॥ हरिपक्षेप्येवम् ॥

ओमिति पदं त्वामेव गृणाति बोधयति तदुक्तम् ओङ्कारश्चैव सत्यं च सावित्री पृथिवीति च समस्त जगदाधारश्शेषरूपधर हि सः इत्यादि ।

## ॥ रामपक्षे ॥

ओमिति पदं त्वामेव गृणाति ओङ्काररूपत्वे एष एव रजोयुक्तो ब्रह्मा भूद्विश्वभावनः सत्वाविष्टस्तथा विष्णुस्त्रि जगत्परिपालकः एष रुद्रस्तमस्यन्ते जगत्प्रलयकारणम् अकारश्च तथोकारो मकारश्चाक्षरत्रयम् एताएव त्रयो मात्रास्सत्वराजसतामसः इत्येतदक्षरं ब्रह्म परमोङ्कारसंज्ञितम् रामं विद्धि परं ब्रह्म सच्चिदानन्दविग्रहम् सर्वोपाधिविनिर्मुक्तं सत्तामात्रमगोचरम् आनन्दं निर्मलं शान्तं निर्विकारं निरञ्जनम् सर्वव्यापिनमात्मान स्वप्रकाशमकल्मषम् इत्यादि वचनमेव मानमित्यवसेयम् । अर्थस्तु पूर्ववदूह्यः ।

## ॥ श्रीकृष्णपक्षे ॥

एता एव त्रयो मात्रास्सत्वराजसतामसाः इच्छां चक्रे यदा कृष्णो मायां पुरुषरूपधृक्। ब्रह्माविष्णुशिवश्चापि रजस्सत्वतमोगुणैः पुरुषास्त्रय उत्तस्थुरधिकारांस्तथादिशत्। उत्पत्तौ पालने चैव संहारेऽनुक्रमेणतान् सर्गस्थित्यप्यया-र्थाय रजस्सत्वतमोगुणैः। लीलैव विविधा तस्य वास्तवी व्यावहारिकी वास्तवी तु स्वयं वेद्या जीवानां व्यावहारिकी। वास्तवी नित्येत्यर्थः कृष्णेनाथ नियुक्तोहं व्रजेस्वप्रेयसीगणैः विरहातांसु गोपीषु स्वयं नित्य विहारिणा। गुणातीतं परमं ब्रह्म व्यापकं व्रज उच्यते सदानन्दं परं ज्योतिर्मुक्तानाम्पदमव्ययम्। तस्मिन्नन्दात्मज कृष्णःसदानन्दाङ्गविग्रहः आत्मारामश्चाप्तकामः प्रेमाक्तैरनुभूयते। इत्येदक्षरं ब्रह्म परमोङ्कारसंज्ञितम्। अर्थस्तु पूर्ववत्।

## ॥ शिक्षापक्षे ॥

महिम्नः पारंते इत्यादिभिश्शिक्षामुपदिश्येदानीं ब्रह्मादि पिपीलिकापर्यन्तस्य ब्रह्मरूपत्वात्तं ब्रह्मरूपेण बोधयति। ओमिति पदम् त्वामेव ब्रह्मरूपं कथयति। आत्मैवाहमहमात्मा जगत्यहं मयि जगत् अहम्ब्रह्मास्मि तत्वमसि अयमात्मा ब्रह्म प्रज्ञानम्ब्रह्मेत्यादि महावाक्यावलोकनेन विचारणीयम्।

॥ स्त्रीपक्षे ॥

गोपिकाः प्रति श्रीकृष्णवाक्यम् तत्पक्षा बोधयति । श्रोमितिपदं त्वामव कथयति वन्हीषु त्वामित्येकवचनम् । आत्मैवाहमित्यादि पूर्ववत् ॥२७॥

---

भवः सर्वो रुद्रः पशुपतिरथोग्रः सह महान् स्तथा भीमेशानाविति यदभिधानाष्टकमिदम् । अमुष्मिन् प्रत्येकं प्रविचरति देवश्रुतिरपि, प्रियायास्मै धाम्ने प्रणिहित नमस्योऽस्मि भवते २८

एवमुक्तश्लोकत्रयेण परमानन्दरूपाद्वितीयत्वादतिदुरूहत्वेन कतिपयमार्गेणो पास्यत्वं प्रदर्श्य इदानीमतिरोचकत्वान्नामाष्टकं प्रति देवानां श्रवणेन्द्रियप्रचरत्वमिति सुगमत्वेन सर्वोपास्यत्वं च प्रकटयन्स्तौति भव इति । हे शरणद अत्रातिभक्त्युद्रेकत्वादेव नमस्क्रियायाम् सम्बोधनस्य विस्मृतिरितिसम्बोधनाभावस्याभिप्रायः । यदभिधानस्य नाम्नोऽष्टकमभिधानाष्टकम् अमुष्मिन् प्रत्येकं एकमेकम्प्रति देवानाम् ब्रह्मादीनां श्रुतिरिति देवश्रुतिः श्रवणेन्द्रियं प्रचरति प्रकर्षेणातिरोचकत्वान्निरालस्यं प्रवर्त्तते ।

एकैकस्मिन्नाम्नि देवश्रुतेः प्रसङ्गत्वादतिरोचकत्वं ध्वन्यते । अन्येषां तु प्रचरत्वमेवेत्यर्थः । ननु किं नामाष्टकम् यस्यातिरोचकत्वं वर्ण्यते भव इत्यादि । महता वेदेन सह वर्तते इति समहान् वेदसाहित्येनवेदानां शिवप्रणीतत्वं ध्वन्यते । तदुक्तं शिवपुराणे अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात् अर्थशास्त्रं परं तस्माद्विद्या ह्यष्टादशस्मृताः । अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् आदिकर्त्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः । एवं च वेदानां नित्यसर्वज्ञपरमेश्वरप्रणीतत्वेन प्रामाण्यमिति नैयायिकाः । मीमांसकास्तु वेदानां नित्यत्वेन निरस्तसमस्तपुंदूषणतया प्रामाण्यमाहुः । वेदान्तमते तु उत्पत्तिमत्वात्तेषामनित्यत्वम् उत्पत्तिमत्वञ्चास्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेद इत्यादिश्रुतेरितिदिक् । एवं च यस्य प्रत्येक नामेदृशं स पुनः कीदृश इति भक्त्युद्रेकेण प्रणमति अस्मै इति अस्मै निरंजनाय धाम्ने सर्वावासस्थानाय पुनः प्रियाय भक्तवत्सलाय भवते प्रणिहितनमस्योऽस्मि तवयोग्योपचाराभावात्कृतनमस्कारो भवामि ।

## ॥ हरिपक्षे ॥

भवतीति भवः इत्यादि नाम यौगिकम् ।

---

## ॥ रामपक्षे ॥

भवति चतुर्धा देवकार्यायेति भवः। सीताविरहे रोदित्यति-विलापं करोतीति रुद्रः। पशुपतिः पशुतुल्यानां मनुजानां पशूनामश्वादीनाम्वा पतिः। उग्रः ओचतीति उग्रः शत्रुसहनने ऽतिकठोरः। भीमः शत्रूणाम्भयंकरः। ईशानः सर्वस्वामी राजेत्यर्थः। देवस्य शिवस्यापि श्रुतिः प्रत्येकं नामसु प्रचरति तदत्यतिभक्तत्वात् किमन्येषाम्। शिवभक्तिः पुराणादौ प्रसिद्धा। प्रियाय सीतावल्लभाय दशरथप्राणाधिकायेतिवा।

## ॥ कृष्णपक्षे ॥

पृथ्वीभारावतरणाय व्रजे भवतीति भवः यद्वा नन्दाय ब्रह्मणो भुवि ईश्वरे तव भक्तिरस्तु इत्याशीर्वादं सत्यं कर्तुं व्रजे भवतीति। तदुक्तम्भागवते द्रोणो वसूनाम्प्रवरो धरया सह भार्यया करिष्यमाण आदेशान् ब्रह्मणः तमुवाचह। कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः सह रामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया इत्यादि॥ गोपिकाः प्रति सरतीति सर्वः। लोकाननुकुर्वन् रोदितीति रुद्रः। पशूनां गवादीनां पतिः पशुपतिः। ईशानः सर्वविद्याप्रवर्तकः। प्रियाय गोपीवल्लभाय अन्यत्समानम्।

## ॥ शिक्षापक्षे ॥

तत्वज्ञानमुपदिश्येदानीमतिरोचकत्वं मदर्शंयन्नमस्कारं कार

यति । तेस्मि अहं जनः इति अस्मै प्रणिहितनमस्यो भव स्मीत्य॰ व्ययम् । अहमित्यस्मिन्नर्थे वर्तते,अन्यच्छिवपादवत् ।

॥ स्त्रीपक्षे ॥

देयश्रुतिः कामस्यापि श्रवणेन्द्रियम् । भवति क्रीडार्थे इति भवः स्त्रीजनः । सरति गमनं करोति पत्ये इति सर्वः । रुदति अल्पेपि प्रयोजने रुद्रः । पशुर्ज्ञानशून्यः पतिर्यस्य सः पशुतुल्यानां पुत्रादीनां पतिरिति वा । उग्रः कठोरहृदयः । तथा समहान् महता श्वसुरादिना सह वर्तते । अभीमः दर्शनेपि मनोहरः । ईशानः गृहेश्वरः । यस्येदृशं नाम स त्वं मया लब्ध इति मद्भाग्यम् । यूयं गृहपत्यादिकं विहाय मामभजतः शतवर्षैरपि भवत्सुपकरणेऽसामर्थ्यात्केवलं नमस्करोमि । अस्मै स्वाधीनाय प्रियाय सर्ववल्लभायेत्युपहासपरं वचनम् । गृहादित्युक्त्वा॰ त्स्वाधीनत्वं ध्वन्यते । भवते कृतनमस्कारो भवामि ॥२८॥

नमो नेदिष्ठाय प्रियदवदविष्ठाय च नमो, नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः । नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो, नमः सर्वस्मैते तदिदमिति सर्वाय च नमः ॥२९॥

एवं ज्ञातात्युत्कर्षभक्तिभावः परमानन्दस्याद्वितीयस्याल्पमतिभिरतिदुरूहत्वेन स्वरूपनिर्णयासम्भवात्सर्वदा नमस्कार एव करणीय इत्याकलय्य नमस्क्रियते नमोनेदिष्ठायेति । अत्यन्तविरुद्धस्य ब्रह्मणस्स्वरूपनिर्णयासम्भवादेव सम्बोधना भावः । सम्बोधनसम्बन्धस्तु सगुणाभिप्रायेणेति बोध्यम् । स्वहितं साधयितुं पुनः पुनर्नमस्कारमेव कुर्वन्स्तौ ति नमो इति । हे प्रिय भक्तवत्सल पुनर्देव अन्तर्यामिन् दीव्यति क्रीड़ति चतुर्विधशरीरेषु इति देवः । तुभ्यं नेदिष्ठाय अत्यन्तसमीपवर्तिने हृदिस्थाय नमः अतिशयेनान्तिको नेदिष्ठः । इष्ठ नि परे अन्तिकबाढयोर्नेदसाधाविति नेदादेशः । तथा दविष्ठाय दूरतरवर्तिने नमोनमः इत्यादरे वीप्सा । स्थूलदूरयुवेति दूरशब्दस्य दवादेशः । क्षोदिष्ठायक्षुद्र तराय अत्र क्षुद्रशब्दस्य क्षोदादेशः । महिष्ठाय महत्तराय नमः वर्षिष्ठाय वृद्धतराय नमः । यविष्ठाय युवतराय तथा सर्वस्मै सर्वरूपाय तद्ब्रह्म इदम् विश्वम् इत्यनेन प्रकारेण वाच्यं सर्वं यस्मिन्निति सर्वाधिष्ठानभूताय न बहु ब्रीहावित्यनेन सर्वनामसंज्ञानिषेधात्स्मै न कृतः सर्वमिति भिन्नम् । तव सर्वरूपत्वं नामापि सर्वं सर्वाश्रेति तथाचामरः ईश्वरः सर्व ईशानः । संज्ञोपसर्जनप्रतिषेधः सर्वो नाम कश्चित्तस्मै सर्वाय देहीति भाष्यात्सर्वनामत्वाभावात्स्मै न कृतः संज्ञानामुपसर्जनीभूतानां च सर्वनामसंज्ञायाः प्रतिषेध इति भाष्यार्थः । एवञ्च सर्वं इति पदं शिवे रूढमित्यवसेयम् ।

---

## ॥ हरिपक्षे ॥

पूर्ववत्सम्बोधनार्थः।

## ॥ रामपक्षे ॥

हे प्रिय भक्तवत्सल पुनर्दं च अयोध्याविहारिन् पुनः स्मरहर स्मर्यते ईश्वरोऽनेन हेतुना जनैरिति स्मरस्तं हरति नाशयतीति रावणनाशक रामचन्द्र तुभ्यं नमः। नेदिष्ठाय समीपतर वर्तिने अक्षिगोचराय। दविष्ठाय दूरतर वर्तिने त्वत्पादविमुखानामिति शेषः। क्षोदिष्ठाय क्षुद्रतरायक्त तनिद्यमत्स्याद्यवताराय। महिष्ठाय ईश्वरावताराय महति रघुवंशकुले जाताय। वर्षिष्ठाय ज्ञान-वृद्धाय सर्वस्मै सर्वभूतमयाय नृपस्य सर्वभूतमयत्वादन्य-त्समानम्।

## ॥ श्रीकृष्णपक्षे ॥

गोप्यो नमस्कुर्वन्ति क्षोदिष्ठाय क्षुद्रतराय वनचराय।

## ॥ शिक्षापक्षे ॥

महावाक्योपदेशेन ज्ञानोदयादीश्वरनमस्करणेन शुद्धस्वरूपं तं स्वयमेव नमस्करोति। हे प्रिय ईश्वरभक्त देवतुल्य, तुभ्यं नेदिष्ठाय ईश्वरस्यात्यन्तसमीपवर्तिने नमः। क्षोदिष्ठाय क्षुद्र-तराय दुष्टकर्मत्यागेन दुष्टजनाप्रियाय। महिष्ठाय महत्तरायेश्व-रभक्तत्वात्सर्वजनेभ्यः श्रेष्ठाय। सर्वस्मै सर्वरूपेश्वरार्थं। दवि-ष्ठायविषयेभ्यो दूरतरवर्तिने। किम्भूताय सर्वस्मै तदिदामति सर्पायेति पूर्ववत्॥

## ॥ स्त्रीपक्षे ॥

तासां प्रत्युपकाराभावान्नमस्कार एव करणीय इति पुनः पुनः प्रणमति । हे प्रिय मम प्राणाधिक वल्लभ दिव्यरूप स्त्रीजन तुभ्यं नमः । दविष्ठाय स्वपत्यादिभ्यान्येभ्यो वा दूर वर्तिने । तथा महिष्ठाय मां प्राप्तत्वात्सर्वश्रेष्ठाय । वर्षिष्ठाय सौन्दर्याधिक्याय शेषं समानम् ॥२९॥

बहलरजसे विश्वोत्पत्तौ भवाय नमोनमः, प्रबलतमसे तत्संहारे हराय नमोनमः । जनसुखकृते सत्त्वोत्पत्तौ मृडाय नमोनमः, प्रमहसिपदे निस्त्रैगुण्ये शिवाय नमोनमः ॥३०॥

इदानीं सगुणं निर्गुणं च नमस्कुर्वन्स्तौति । प्रथमं हिरण्यगर्भस्य जगत्कर्तृत्वात्तद्रूपत्वेन नमस्करोति । विश्वस्य उत्पत्तौ उत्पत्तिसमये बहलरजसे सत्त्वतमोभ्यामधिकरजोगुणाय बहुलं बहलमिति द्विरूपकोशः । भवाय भवत्यस्माद्विश्वमिति भवाय ब्रह्ममूर्तये नमः । विश्वलये प्रबलतमसे सत्त्वरजोभ्यामधिकतमोगुणाय । संहारःस्वस्मिन् सूक्ष्मरूपेण स्थापनं तस्य विश्वस्य संहार काले हराय रुद्ररूपाय ते नमः । तथा जनसुखकृते ब्रह्म-

निर्मितचतुर्दशभवने स्वस्वाधिकारे वर्तमानानांयत्सुखं तस्य कृते तदर्थं सत्वस्योत्पत्तिः रजस्तमोभ्यामाधिक्यं तस्याम्। मृडयति सुखयति जीवानिति मृडस्तस्मै विष्णुमूर्तयेनमः। एवं त्वं विश्वोत्पत्यादिसमय एव गुणान् गृह्णासि नतु मायाकार्यं गुणाधीन इति निर्गुणत्वेन प्रणमति निस्त्रैगुण्येति। त्रयाणं सत्वादि गुणानां समाहारइति त्रिगुणं तस्य भावस्त्रैगुण्यम् गुण वचनत्वात् ष्यञ् प्रत्ययः निर्गतं त्रैगुण्यं यस्मात्तस्मिन्। अतएव प्रमहसि प्रकृष्ट मायाकार्यत्वानवच्छिन्नं महोयस्मिन् गुणादीनामेव कार्यत्वात्तस्याः परत्वं ध्वन्यते। एवम्भूते पदे शिवाय कल्याणरूपाय मोक्षरूपायेत्यर्थः। शिवमद्वैतं चतुर्थं मन्यंते इति श्रुतेः। एवं तुरीयस्य ज्ञानोदयनिमित्तत्वम् तत्रज्ञानस्यैव मुक्तिकारणत्वात्-ऋते ज्ञानान्न मुक्तिरिति श्रुतेः।

॥ हरिपक्षेप्येवम् ॥

॥ रामपक्षे ॥

विश्वोत्पत्तौ विश्वस्य दुष्टजनस्योत्पत्तौ बहलरजसे उत्पत्तौ तु तन्निमित्तकोपद्रवाभ वादसुरराज्यभोगिने ते नमः। भवत्यस्मिन् सुखमिति। भवस्तस्मै स्वात्मारामायेत्यर्थः। तथा तत्संहारे दुष्टजननाशे प्रबल तमसे दुष्टनाशकरायेत्यर्थः। दुष्टान्तकस्य दुःखनाशकत्वात्सुखहेतुत्वादित्यन्तादरे नमश्शब्दस्यावृत्तिः। तथा जनसुखकृते भक्तजनसुखार्थं सत्वोद्रिक्तौ सत्वावस्थायां

मृडाय भक्तेषु कृपाकटाक्षक्षेपणेनातिसुखकराय । एवमवस्थात्रयस्य कार्यनिमित्तत्वाद्भवान् वस्तुतो निर्गुणोऽसीत्याह निस्त्रैगुण्ये इति शेषं समानम् ।

## ॥ श्रीकृष्णपक्षे ॥

विश्वोत्पत्तौ बहलं रजो यस्मात्तस्मै भवाय ब्रह्मोत्पत्तिकराय । तथा विश्वलये प्रबलतमसे प्रबलं तमो यस्मात्तस्मै तत्संहारे हराय रुद्रोत्पत्तिकराय । सत्वोद्रिक्तौ मृडाय विष्णूत्पत्तिकराय । पुरुषत्रयोत्पत्तौ तु स्कन्द एव प्रमाणम् । इच्छां चक्रे यदा कृष्णो मायी पुरुषरूपधृक् ब्रह्माविष्णुशिवश्चापि रजस्सत्वतमोगुणैः । पुरुषास्त्रय उत्तस्थुरधिकारांतथादिशत् उत्पत्तौ पालने चैव संहारेनुक्रमेण तान् । शेषं समानम् ।

## ॥ शिक्षापक्षे ॥

इदानीं तस्य शुद्धान्तःकरणेन भक्तिदूतत्वाज्जीवब्रह्मैक्यभावेन नमस्करोति । स्वोपदेशेन मायाकार्यविश्वनिवृत्तित्वात्तत्त्वात्परं पदं प्राप्तमिति ध्वनयितुं नमोनमः इति नमश्शब्दावृत्तिः । अर्थस्तु शिवविष्णुपक्षवद् ज्ञेयः ।

## ॥ स्त्रीपक्षे ॥

विश्वोत्पत्तौ बहलरजसे भवाय भवत्यस्मादिति भवः

पदार्थो ब्रह्मशक्तिस्तद्रूपाय स्त्रीजनाय ते नमः ।। तथा संहारे हराय हरति विश्वमिति हराय रुद्रशक्तिरूपाय तथा मृडाय विष्णुशक्तिरूपाय। स्त्रीणां शक्तिरूपत्वं तु मार्कण्डेये प्रसिद्धम्। विद्याः समस्तास्तव देवि भेदाः स्त्रियस्समस्तास्सकला जगत्सु । अतएव भवतीनामपि त्रिगुणावच्छिन्नत्वमिति भावः अत्र बहलरजसे भोगप्रियाय प्रबलतमसे अज्ञानस्वरूपाय सत्वोत्पत्तौ मृडाय गृहिणां सुखकरायेत्यर्थः। एवं शक्तिरूपत्वं स्थितम्। तथा च विश्वोत्पत्त्यादि कार्याय गुणधारणं वस्तुतो निर्गुणोऽसीत्याह निस्त्रैगुण्ये इति । प्रकृष्टं सर्वोत्कृष्टं महो यस्मिन् एतादृशे पदे शिवाय कल्याणमोक्षरूपाय तथा भागवतेन तस्य कालावयवैः परिणामादयो गुणाः अनाद्यनन्तमव्यक्तं नित्यकारणमव्ययम्। न यत्र वाचो न मनो न सत्वं तमो रजो वा महदादयोऽमी न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः। न स्वप्नजाग्रन्न तत्सुषुप्तं न खं जलं भूरनिलोग्निरर्कः सुषुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥३०॥

---

कृशपरिणति चेतः क्लेशवश्यं क्व चेदं क्व च तव गुणसीमोल्लंघिनी शश्व

द्धिः । इति चकितममन्दीकृत्य मां
भक्तिराधाद्, वरद चरणयोस्ते वाक्य
पुष्पोपहारम् ॥३१॥

एवं यथाशक्ति भगवन्तं स्तुत्वा स्वस्यौद्धत्यपरिहारार्थं मम-
त्वेतां वाणीमित्यन्वोपक्रान्तमुपसंहरन्नाह । हे वरद भक्ता एवंविध
यत्किञ्चिद्ददाति तुभ्यं तस्य त्वं वरदाने आसक्तोऽसि तव चरण-
योर्वाक्यमेव पुष्पोपहार मम वरदानेन नाधिक व्यापारः एवं
यत्र भक्तिस्तत्र त्वं वरदोऽसीति सम्बोधनं युक्तमेव । भक्तिस्ते
तव चरणयोर्वाक्यमेव पुष्पानामुपहारं बलिं माधात् अर्पयत् ।
अन्यस्य योग्यदेयाभावात्तदेव देयमिति भावः । किं कृत्वा
इतिहेतोश्चकितं भीतभीतं माममन्दीकृत्य तव स्तुतिविषये
स्वव्यापारेण प्रोत्साह्य । कस्माद्धेतोरित्याह–क्वेति क्व एतादृशं
चेतः पुनः क्व तव शश्वदित्या ऋद्धिर्विभूतिरिति । किम्भूतम्
चेतः कृशपरिणति कृशा अतिमन्दा परिणतिः परिपक्वता यस्य ।
तथा पुनः क्लेशवश्यं क्लेशा रागद्वेषादयस्तेषामाधीनम् वशंगत
इति वश्यं वशंगत इत्यनेन यत्प्रत्ययः । एवं क्लेशानां दुर्जयत्वात्
तेभ्यो व्यतिरिच्यते इति भावः । किम्भूता तव ऋद्धिः गुणानां
सीमा मर्यादा तस्या उल्लंघिनी उल्लंघयतीति उल्लंघिनी
उल्लंघनवर्तिनी । अनन्त्यत्वाद्गुणानामियत्तसंख्यापरिच्छिन्ना-
नीति मर्यादाभावादित्यर्थः। एवं परमानन्दस्याद्वितीयस्य सगु-

शस्य च तव प्रभावज्ञानस्य दुर्घटत्वात्पराधीनाय रागद्वेषादि-भिर्भिन्नचेतसे भक्त्याकांक्षालयाय मह्यं भक्तिरेव भवद्भिः करुणासागरैर्वर्द्धनीयेति भावः ।

## ॥ हरि राम कृष्ण पक्षेष्वप्येयम् ॥

शिक्षापक्षे वाक्यं जीवशिक्षारूपं तदेव पुष्पोपहारं बलिः भक्तिः । उपदेशकरणे प्रेमरूपा ।

## ॥ स्त्रीपक्षे ॥

ते तव स्त्रीसमूहस्येत्यर्थः । भक्तिर्ममैव चिन्तनरूपा वाक्यं मया सार्द्धं प्रलापं तदेव पुष्पोपहारं बलिमाधात् मया परमेश्वरेणाविच्छिन्नैश्वर्येण सह भवतीभिः प्रलापः कृत इति महद्भाग्यातिशयमिति ध्वनिः । किं कृत्वा लोकाननुकुर्वन् चकित मामन्दीकृत्य स्वप्रलापे प्रोत्साह्य । मया सह प्रलापस्य दुर्घटत्वमित्याह कृशेति । यतश्चेतः कृशपरिणति इति हेतोः पुनः क्लेशवश्यं एतादृशं तव चेतः क पुनः क मम गुणसीमोल्लंघिनी शश्वदृद्धिरिति पूर्ववदर्थः ॥३१॥

---

कुसुमदशननामा सर्वगन्धर्वराजः, शशिधरवरमौलेर्देवदेवस्य दासः । स

गुरुनिजमहिम्नो भ्रष्ट एवास्य रोषात्
स्तवनमिदमकार्षीद्दिव्यदिव्यं महिम्नः ॥

अथ स्तोत्रान्तर्गता अपि फलस्तुतयो व्याख्यायन्ते । कुसुमानि पुष्पाणि इव दशना दन्ता यस्य सः । दश्यते एभिरिति दशनाकरणे युच् । तन्नामकः पुष्पदन्त इति प्रसिद्धनामा सर्वगन्धर्वाणां राजः शशिधरश्चन्द्रः स चासौवरः मौलौ यस्य तस्य देवदेवस्य शिवस्य दासो भक्तः । एवम्भूतोपि शिवस्य निर्माल्य लंघन जन्यदोषाद्धेतोः भ्रष्टा निजमहिम्नस्स्वकीयमहिम्नस्तेजसः सकाशाद् भ्रष्ट एवकिम्पुनर्निस्तेजस्कः । एवं भक्तजनैस्सावधानेन भवितव्यम् । अ तएव भगवतो महिम्नः स्तवनमकार्षीत् किम्भूतं दिव्यं दिवि भवं तद्देवकृतमित्यर्थः । तस्मादपि दिव्यमधिकगुणावच्छिन्नम् । भगवतो दिव्यस्तवनेन पूर्ववद्भवदित्यर्थः ॥३२॥

सुरगुरुमभिपूज्यं स्वर्गमोक्षैकहेतुम्
पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेता । व्रजति शिवसमीपं किन्नरैः स्तूयमानः, स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥३२॥